# पातञ्जलदर्शनम्

श्रीमद्‌यतिरामानन्दसरस्वतीकृत-

## मणिप्रभा-

वृत्त्युपेतम् ।

वङ्ग-हिन्दीभाषानुवाद-सूत्रपाठादि-सहितम् ।

सांख्यतीर्थोपनामक-

श्रीमद् रोहिणीकान्तसिद्धान्तवागीश-

भट्टाचार्य्येण सम्पादितम् ।




संस्कृतपुस्तकालयात्

श्रीअखिलबन्धु-भट्टाचार्य्येण प्रकाशितम् ।

१९२२

 मूल्यं १॥० सार्द्धरौप्यकम् ।

पुस्तकप्राप्तिस्थान—

संस्कृत पुस्तकालय—

अध्यक्ष—श्रीअखिलबन्धु भट्टाचार्य्य,

५८ कर्णवालिस ष्ट्रीट्, कलिकाता।

Printed by Bishnupado Hazra.
At the SANSKRIT PRESS
124/2/1 Maniktola Street, Calcutta.

# भूमिका

अथेह जगति सर्व्वयेव मनुजा दुःखोदधौ निपतितास्तत्तर्त्तुकामा इतस्ततः पर्य्यटन्ति। तान् प्रत्यसीमकरुणापरवशतया मुमुक्षूणामुपचिकीर्षया च परमकारुणिकः परमेश्वरः सच्चिदानन्दघनासीमनिखिलपरिच्छेदपरिवर्ज्जितोऽपि महर्षिकपिलादिरूपेणाविरासीत्। तैः प्रणीतानि षड्दर्शनानि निःश्वासप्रश्वासन्यायेन वेदादिशास्त्राण्यपि प्रचारितान्यासन्। पाश्चात्यदर्शनादेतेषां दर्शनानामिदमेव गौरवं यद्धर्म्मेण सह सर्व्वथा सम्बद्धमिति। अतिदुरूहविषयतया दुःखोच्छेदकतया च तानि जगद्धमत्कुर्व्वन्ति। तेषु च महर्षिपतञ्जलिना प्रणीतं योगदर्शनं त्रिविधदुःखात्यन्तनिवृत्तिरूपकैवल्यफलप्रकाशकतया मुमुक्षूणामतीवोपकारकम्। परस्परविवदमानेषु दर्शनेषु योग एवाजातशत्रुः, तथा च शारीरकभाष्यम्—"अथ तत्त्वदर्शनोपायो योग इति सम्यग् दर्शनाभ्युपायत्वेनैव योगोऽङ्गीक्रियते, अतः सम्प्रतिपन्नार्थैकदेशत्वादष्टकादिस्मृतिवद् योगस्मृतिरप्यनवद्या भविष्यतीति।" भामती च—"बहुलं हि योगशास्त्राणां वेदेन सह संवादो

दृश्यते। उपनिषदुपायस्य च तत्त्वज्ञानस्य योगापेक्षास्ति। न जातु योगशास्त्रविहितयमनियमादिं वहिरङ्गमुपायमपहायान्तरङ्गञ्च धारणादिकमन्तरेणौपनिषदात्मतत्त्वसाक्षात्कार उदेतुमर्हति। तस्मादौपनिषदेन तत्वज्ञानेनापेक्षत्वात् संवादबाहुल्याच्च वेदेनाष्टकादिस्मृतिवद् योगस्मृतिः प्रमाणम्" इति। भवति च स एव योगो मन्त्रकर्म्मराजलयविभेदेन बहुविधः। तत्र लययोगोनाम सार्व्वभौमचित्तवृत्तिनिरोधरूपः, सर्व्वस्मादधिकतरचित्तैकाग्रद्वारा वृत्तिनिरोधसम्पादनेनामृतमोक्षप्रदत्वात्। तथा च भोजराजः— "चित्तस्य निर्म्मलसत्त्वपरिणामरूपस्य या वृत्तयोऽङ्गाङ्गीभावपरिणामरूपास्तासां निरोधो वहिर्म्मुखपरिणतिविच्छेदादन्तर्मुखतया प्रतिलोमपरिणामेन स्वकारणे लयो योगः" इति लययोगस्य स्वरूपः।

अत्र किल योगशब्दस्य व्युत्पत्त्यर्थमपहाय प्रकृतिपुरुषवियोगार्थं विवृणोति राजमार्त्तण्डस्तथाहि—

"पतञ्जलिमुनेरुक्तिः काप्यपूर्व्वा जयत्यसौ।
पुंप्रकृत्योर्व्वियोगोऽपि योग इत्युदितोयया॥" इति।

अभ्युपगच्छामश्च सांख्ययोगदर्शने पञ्चविंशतितत्त्वानि यथा च तानि—

सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, प्रकृतेर्महान् महतोऽहंकारोऽहंकारात् पञ्चतन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यः स्थूलभूतानि पुरुषश्चेति। तत्र "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" इति सांख्यसिद्धानि पञ्चविंशति तत्त्वानि योगानुमतानि च।

अस्ति तावत् सांख्यात् योगशास्त्रस्यायं विशेषो यत् पञ्चविंशतितत्त्वातिरिक्तस्य क्लेशकर्मविपाकाशयैरपरामृष्टस्येश्वरस्याभ्युपगम इति।

सांख्यस्तावत् मुख्यतया ज्ञानमेव मुक्तेः कारणं व्यपदिशति, योगः खलु योगमेवेत्यनयोर्वैषम्यम्।

अस्य किल योगशास्त्रस्य सन्ति तावत् समाधि-साधन-विभूति-कैवल्यनामधेयाश्चत्वारः पादाः। तत्र प्रथमे समाधेः स्वरूपः। द्वितीये तस्य साधनोपायः। तृतीये तस्य फलम्। चतुर्थे पुरुषस्य कैवल्यम्। शास्त्रस्यैतस्य समाधिरीश्वरप्रणिधानं वा मुख्यं साधनम्। तत् साधनानि च यमनियमादीन्यष्टाङ्गानि। दृष्टेषु स्रक्चन्दनवनितादिविषयेषु, स्वर्गाद्यशेषसुखेषु चानुश्रविकेषु साधनेषु न्यूनाधिकभावनया क्षणिकत्वक्षयित्वादिदोषदर्शनेन च रागाभावो वैराग्यं तदेव

योगस्य निदानं। प्रत्यक्षानुमानागमभेदेन त्रीण्येव प्रमाणानि। षड्विंशतितत्त्वानि चेति पदार्थाः। चित्तवृत्तिनिरोधेन परमेश्वरप्रणिधानेन वा पुरुषस्य स्वरूपावस्थितिरेव मोक्षः, इति समासतो योगग्रन्थ-प्रतिपाद्यविषयाः।

अस्ति तावद्महर्षिपतञ्जलेराविर्भावविषये वादिनां विप्रतिपत्तिः, केचिदाहुः—

यः पुनर्महाभाष्यकारः स न योगदर्शनकारः इति। यस्मात् महाभाष्ये योगदर्शनस्य योगदर्शने च महा-भाष्यस्य नामापि नास्ति। विशेषतो महाभाष्ये द्रव्यं गुणा इति निर्देशाद् योगदर्शने तु धर्म्मधर्म्मीत्याद्यनेकत्र नाना वैषम्यदर्शनाच्चानेके एव पतञ्जलय इत्यामनन्ति।

एतत्तु नाभ्युपगच्छामो वयं नानाग्रन्थे तस्यैकत्व-प्रतिपादनदर्शनात्। तथाच राजमार्त्तण्डः—"शब्दाना-मनुशासनं विदधता पातञ्जले कुर्व्वता। वृत्तिं राज-मृगाङ्कसञ्ज्ञकमपि व्यातन्वता वैद्यके। वाक्चेतो वपुषां मलः फणभृतां भर्त्तेव येनोद्धृता। तस्य श्रीरणरङ्गमल्ल-नृपतेर्वाचो जयन्त्युज्ज्वलाः।" इत्यादिवाक्येन भोज-राजः स्वस्य पतञ्जलिनातुल्यत्वमाचचक्षे। महाभाष्यं, चरकभाष्यस्यान्तरेण पतञ्जलिकृतोऽन्यः शब्दग्रन्थो वैद्यक-

ग्रन्थस्य न सन्नोद्यतेऽस्माभिः। एक एव पतञ्जलिर्महाभाष्यं चरकभाष्यं योगदर्शनञ्च प्रणिनायेति सम्यक् प्रमाणयति वासवदत्ताटीकाकारो यथा—

"योगेन चित्तस्य पदेन वाचो-
मलं शरीरस्य तु वैद्यकेन।
योऽपाकरोत् तं प्रवरं मुनीनां
पतञ्जलिं प्राञ्जलिरानतोऽस्मि" ॥ इति।

पतञ्जलिचरितेऽपि—

"सूत्राणि योगशास्त्रे वैद्यकशास्त्रे च वार्त्तिकानि तात। कृत्वा पतञ्जलिमुनिः प्रचारयामास जगदिदं त्रातुम्"। चक्रपाणिकृत-चरकभाष्येऽपि च—

"पतञ्जलिर्महाभाष्यं चरकं प्रति संस्कृत्य।
मनोवाक्कायदूषणां हन्ति हि पूतनामा" ॥

इत्यादि बहुषु ग्रन्थेषु महाभाष्यकारस्य चरकप्रतिसंस्कारकस्य योगदर्शनकारकस्य चैकत्वप्रतिपादनदर्शनादेक एव पतञ्जलिरिति वक्तुं सर्व्वतः समुपयुज्यते।

अपि स हि नाम तत्रभवान् महर्षिः कस्मिन् काले कस्मिन् देशे च प्रादुर्बभूव तद्विस्तरशः प्रयासेनापि न तत्त्वतो निर्णेतुं शक्नुमः। तथापि यथाकथञ्चिदालोचयामः।

अत्र केचित् प्राहुः दर्शनस्यास्य विभूतिपादे चतुर्दशपञ्चदशसूत्रेण, कैवल्यपादे च चतुर्दशैकविंशतिसूत्रेण विज्ञानवादिनो बौद्धान् प्रत्याक्रमणदर्शनात् तेषां परकालीनोऽयमिति। अपि हि द्विशतखृष्टशके समुत्पन्नः शून्यवादी नागार्ज्जुनो योगं बहुलं स्मृत्वापि पतञ्जलिर्नामापि नोल्लिलेख, सुतरां नागार्ज्जुनात् परोऽयं प्रादुरासीदिति एवं साङ्ख्यकारिकाभाष्ये तु गौरपादः पतञ्जलेर्मतं सूत्रञ्चोल्लिखितवान्। तच्च सप्तमखृष्टशके समजनि। तत्त्वार्थाधिगमसूत्रभाष्यकृदुमास्मृतिः तृतीयाध्यायस्य द्वाविंशसूत्रभाष्ये पतञ्जलेर्नामविशेषेण प्रचचक्षे। तच्च खृष्ट-षष्ठशकप्रथमे प्रजातम्। माघकृतशिशुपालबधस्य चतुर्थसर्गे—

“मैत्रादिचित्तपरिकर्म्मविदो विधाय” इत्यादिश्लोकेन पतञ्जलेर्मतं प्रघट्टकेन समुपलिप्तम्।

गौरीशङ्करीभानामकः सुधीर्माघस्य समयं खृष्टषष्ठशकं व्यपदिदेश। सुतरां खृष्टपञ्चमशकमन्तरा महर्षिपतञ्जलेराविर्भूतकाल इति।

मतमेतदामेरिकास्थ-हार्व्वाट्-महोदयोऽपि स्वीचकार। यथा :—

"The conclusion would be then that Patanjali's Sutras were written at some time in the fourth or fifth century of our era."

The Joga system of Patanjali

by J. H. Woods.
Hervard Oriental Series.

अत्रोदासीना वयं, इतःपरं विद्वांस एव प्रमाणम्। अपि हि सांख्यदर्शनस्य सर्व्वदर्शनप्राचीनत्वं सर्व्ववादिसिद्धमेव। यतः प्रायेषु दर्शनेषु तन्मतोल्लेखो दृश्यते, तत्रापि च शून्यवादिनामुल्लेखः, एवं पुराणादिग्रन्थेष्वपि च बौद्धमतमवतारणमवलोक्यते। इत्यादिकारणकूटैरस्माभिर्निर्णीयते यत् प्राङ्नागार्ज्जुनात् प्रागपि शून्यवादो विराजित आसीत्। परं मन्ये कञ्चित्कालं सम्प्रदायविच्छेदोवर्त्तते ततो नागार्ज्जुनस्तत्पुनः प्रचारयामास। एवं सति पतञ्जलेर्नागार्ज्जुनपूर्व्ववर्त्तित्वे को विरोधः। विशेषतो जानन्ति हि सर्व्वे महर्षिपाणिनेः समसामयिकोऽयं पतञ्जलिः। पाणिनेरञ्जलौ पतनादस्य पतञ्जलिर्नामाभवत्। सूर्य्यमाराधयता पाणिनिनैकदा अञ्जलौ सर्पदर्शनाद्भीतेनावादि—"कोर्भवान्?" सर्पो विहस्याह—"सर्पोऽहम्।" पाणिनिरप्याह—रेफः कुत्र? नाग आह—

"भवन्मुखे प्रविष्टः।" इत्यादिवाक्यैः परस्परालापेन तं शेषनागं ज्ञात्वा स्वप्रणीतस्य व्याकरणस्य भाष्यं कर्त्तुं तमादिदेशेति किंवदन्ती। दुर्गटीकायाञ्च—"अत्र लालायितः फणी" इत्यादिवाक्यदर्शनाच्च। योगसूत्र-भाष्ये, "देवोऽहीशः स वोऽव्यात्" इत्यादि व्यासवाक्यैः पतञ्जलिशब्दव्युत्पत्त्या च शेषनाग एव पतञ्जलिः, स एव महाभाष्यं चरकभाष्यं योगदर्शनञ्च कृतवानिति कः खलु सन्देहावसरः?

नूनं पाणिनेरुद्भवः कालस्तु खृष्टपूर्व्वाष्टमशक एव। नितरां पतञ्जलेरपि स एव प्रादुर्भावकाल इत्यव-धारयितुं कः विकल्पः? सन्ति हि दर्शनस्यास्य भाष्यादिविभेदेनानेकशष्टीकावृत्तयश्च। तेषु किल श्रीमद्रामानन्दसरस्वतीयतिवर्य्येण विरचिता मणिप्रभा-वृत्तिर्नातिसुलभतयास्माभिर्मुद्रणयन्त्राधीना नीता। परं सर्व्वसाधारणानां बोधसौकर्य्यार्थ हिन्दीवङ्गानुवादादि-भिर्बहुप्रयत्नेन सरलां कर्त्तुं यथामति संप्रयत्यते। आशास्महे वङ्गहिन्दुस्थानवासिनां तरलमतिनामेते-नैवोपकारः कथं कथमपि समेष्यतीतीतःपरं त एव प्रमाणम्।

अस्य तावद्वृत्तिग्रन्थस्य प्रणेता रामानन्दयति-

नानादर्शनार्थनिगूढ़दर्शीपरमन्नानिति वक्तुमुपयुज्यते। तत्प्रणीतां ब्रह्मामृतवर्षिणीं नाम्नीं ब्रह्मसूत्राणां टीकां तथा शारीरकभाष्यस्य रत्नप्रभाख्यां टीकां विलोक्य परं योगदर्शनस्य मणिप्रभावृत्तिं पर्य्यालोच्य चेतत् सम्यक्-प्रतिबोधिताः स्मः। तथापि च कष्टमहो! कष्टं!! स किल नानाशास्त्रार्थरसिकः परमयतिः श्रीमान् रामानन्दः कं देशं कं वा कालमधिकृत्य कमेव जनकं स्वीकृत्य च प्रादुरासीदिति ज्ञातुमलं स्मः कामना-भिघाततयातिमात्रम्। स केवलं शुकाष्टकटीकार-चयितुर्गङ्गाधरेन्द्रसरस्वतीमहोदयस्य गुरुः, मुकुन्द-गोविन्दस्य शिष्यः, रामकिङ्करापरनाम्ना विद्वद्गोष्ठ्यां परिचित आसीदित्यन्तरेण सर्व्वं कालपटतमसा-वृतमासीदिति किं विचारधियेति शम्।

| | |
|---|---|
| भाशुकादर्शनचतुष्पाठी<br>१३२९ वङ्गाब्दीया<br>रथद्वितीया | विधेय—<br>सम्पादकस्य। |

# पातञ्जलसूत्रपाठः

## समाधिपादः ।

अथ योगानुशासनम् । १ ॥ योगश्चित्तवृत्तिनिरोधः । २ ॥ तदा द्रष्टुः स्वरूपेऽवस्थानम् ।३॥ वृत्तिसारूप्यमितरत्र ।४॥ वृत्तयः पञ्चतय्यः क्लिष्टाः अक्लिष्टाः । ५॥ प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ।६॥ प्रत्यक्षानुमानागमाः प्रमाणानि ।७॥ विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ।८॥ शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ।९॥ अभावप्रत्ययालम्बना वृत्तिर्निद्रा ।१०॥ अनुभूतविषयासंप्रमोषः स्मृतिः ।११॥ अभ्यासवैराग्याभ्यां तन्निरोधः ।१२॥ तत्र स्थितौ यत्नोऽभ्यासः ।१३॥ स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः ।१४॥ दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ।१५॥ तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ।१६॥ वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः । १७ ॥ विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः । १८ ॥ भवप्रत्ययो विदेहप्रकृतिलयानाम् ।१९॥ श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ।२०॥ तीव्रसंवेगानामासन्नः

।२१॥ मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः । २२ ॥
ईश्वरप्रणिधानाद्वा । २३ ॥ क्लेशकर्मविपाकाशयैरपरा-
मृष्टः पुरुषविशेष ईश्वरः ।२४॥ तत्र निरतिशयं सर्वज्ञ-
बीजम् ।२५॥ पूर्वेषामपि गुरुः कालेनानवच्छेदात् ।२६॥
तस्य वाचकः प्रणवः ॥२७ तज्जपस्तदर्थभावनम् ॥२८
ततः प्रत्यक् चेतनाधिगमोऽप्यन्तरायाभावश्च ॥२९
व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्ध-
भूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ।
३० ॥ दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासाविक्षेपसह-
भुवः ।३१॥ तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः । ३२ ॥ मैत्री
करुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां
भावनातश्चित्तप्रसादनम् । ३३॥ प्रच्छर्दनविधारणाभ्यां
वा प्राणस्य । ३४॥ विषयवती वा प्रवृत्तिरुत्पन्ना-
मनसः स्थितिनिबन्धनी । ३५॥ विशोका वा ज्योति
ष्मती । ३६॥ वीतरागविषयं वा चित्तम् । ३७॥ स्वप्न-
निद्राज्ञानालम्बनं वा ।३८॥ यथाऽभिमतध्यानाद्वा ।३९॥
परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ।४०॥ क्षीण
वृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्ज-
नता समापत्तिः । ४१ ॥ तत्र शब्दार्थज्ञानविकल्पैः
सङ्कीर्णा सवितर्का ।४२॥ स्मृतिपरिशुद्धौ स्वरूपशून्येवा-

र्थमात्रनिर्भासा निर्वितर्का ।४३॥ एतयैव सविचारा निर्विचारा च सूक्ष्मविषयाव्याख्याता । ४४ ॥ सूक्ष्मविषयत्वं चालिङ्गपर्य्यवसानम् । ४५॥ ता एव सबीजः समाधिः ।४६॥ निर्विचारवैशारद्येऽध्यात्मप्रसादः ।४७॥ ऋतम्भरा तत्र प्रज्ञा । ४८॥ श्रुतानुमानप्रज्ञाभ्यामन्यविषयाविशेषार्थत्वात् ॥४९ तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ५०॥ तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ।५१॥

इति समाधिपादः ।

## साधनपादः ।

तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः । १॥ समाधिभावनार्थः क्लेशतनूकरणार्थश्च ।२॥ अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः ।३॥ अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ।४॥ अनित्याऽशुचिदुःखाऽनात्मसु नित्यशुचिसुखात्मख्यातिरविद्या । ५॥ दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ।६॥ सुखानुशयी रागः । ७ ॥ दुःखानुशयी द्वेषः । ८ ॥ स्वरसवाही

।२१॥ मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः । २२ ॥ ईश्वरप्रणिधानाद्वा । २३ ॥ क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ।२४॥ तत्र निरतिशयं सर्वज्ञबीजम् ।२५॥ पूर्वेषामपि गुरुः कालेनावच्छेदात् ।२६॥ तस्य वाचकः प्रणवः ॥२७ तज्जपस्तदर्थभावनम् ॥२८ ततः प्रत्यक् चेतनाधिगमोऽप्यन्तरायाभावश्च ॥२९ व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः । ३० ॥ दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ।३१॥ तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः । ३२ ॥ मैत्री करुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् । ३३॥ प्रच्छर्दनविधारणाभ्यां वा प्राणस्य । ३४॥ विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी । ३५॥ विशोका वा ज्योतिष्मती । ३६॥ वीतरागविषयं वा चित्तम् । ३७॥ स्वप्ननिद्राज्ञानालम्बनं वा ।३८॥ यथाऽभिमतध्यानाद्वा ।३९॥ परमाणुपरममहत्त्वान्तोऽस्य वशीकार ।४०॥ क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः । ४१ ॥ तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का ।४२॥ स्मृतिपरिशुद्धौ स्वरूपशून्येवा-

र्थमात्रनिर्भासा निर्वितर्का ।४३॥ एतयैव सविचारा निर्विचारा च सूक्ष्मविषयाव्याख्याता । ४४ ॥ सूक्ष्मविषयत्वं चालिङ्गपर्य्यवसानम् । ४५॥ ता एव सबीजः समाधिः ।४६॥ निर्विचारवैशारद्येऽध्यात्मप्रसादः ।४७॥ ऋतम्भरा तत्र प्रज्ञा । ४८॥ श्रुतानुमानप्रज्ञाभ्यामन्यविषयाविशेषार्थत्वात् ॥४९ तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ५०॥ तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ।५१॥

इति समाधिपादः ।

## साधनपादः ।

तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः । १॥ समाधिभावनार्थः क्लेशतनूकरणार्थश्च ।२॥ अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः ।३॥ अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ।४॥ अनित्याऽशुचिदुःखाऽनात्मसु नित्यशुचिसुखात्मख्यातिरविद्या । ५॥ दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ।६॥ सुखानुशयी रागः । ७ ॥ दुःखानुशयी द्वेषः । ८ ॥ स्वरसवाही

विदुषोऽपि तथारूढ़ोऽभिनिवेशः ।९॥ ते प्रतिप्रसवहेयाः सूक्ष्माः ।१०॥ ध्यानहेयास्तद्वृत्तयः ॥११ क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ।१२॥ सति मूले तद्विपाको जात्यायुर्भोगाः ।१३॥ ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ।१४॥ परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ।१५॥ हेयं दुःखमनागतम् ।१६॥ द्रष्टृदृश्ययोः संयोगो हेयहेतुः । १७॥ प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ।१८॥ विशेषाऽविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ।१९॥ द्रष्टादृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ।२०॥ तदर्थ एव दृश्यस्यात्मा ।२१॥ कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ।२२॥ स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ।२३॥ . तस्य हेतुरविद्या ॥२४ तदभावात् संयोगाभावो हानं तद् दृशेः कैवल्यम् ॥२५ विवेकख्यातिरविप्लवा हानोपायः ॥२६ तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥२७ योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ॥२८ यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि॥२९ अहिंसा सत्यास्तेयब्रह्मचर्य्यापरिग्रहा यमाः॥३० जातिदेशकालसमयानवच्छिन्नाः सार्व्वभौमामहाव्रतम् ।३१॥

शौचसन्तोषतपः स्वाध्यायेश्वरप्रणिधानानि नियमाः ।३२॥ वितर्कबाधने प्रतिपक्षभावनम् ।३३॥ वितर्का-हिंसाऽऽदयः कृतकारितानुमोदिता लोभक्रोधमोह-पूर्व्वका मृदुमध्याधिमात्रादुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ।३४॥ अहिंसा प्रतिष्ठायां तत्सन्निधौ वैरत्यागः । ३५॥ सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् । ३६॥ अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ।३७॥ ब्रह्मचर्य्य-प्रतिष्ठायां वीर्य्यलाभः ।३८॥ अपरिग्रहस्थैर्य्ये जन्मकथ-न्तासम्बोधः ।३९॥ शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः ।४०॥ सत्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्य-त्वानि च ।४१॥ सन्तोषादनुत्तमः सुखलाभः ।४२॥ कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ।४३॥ स्वाध्यायादि-ष्टदेवतासंप्रयोगः ।४४॥ समाधिसिद्धिरीश्वरप्रणिधानात् ॥४५ स्थिरसुखमासनम् ।४६॥ प्रयत्नशैथिल्यानन्तसमा-पत्तिभ्याम् ।४७॥ ततोद्वन्द्वानभिघातः ।४८॥ तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ।४९॥ वाह्या-भ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टोदीर्घः सूक्ष्मः । ५०॥ वाह्याभ्यन्तरविषयाक्षेपी चतुर्थः । ५१॥ ततः क्षीयते प्रकाशावरणम् ।५२॥ धारणासु च योग्यता मनसः ।५३॥ स्वविषयासंप्रयोगे चित्तस्य स्वरूपानुकार

इवेन्द्रियाणां प्रत्याहारः । ५४॥ ततः परमा वश्यते-
न्द्रियाणाम् । ५५॥

इति साधनपादः ।

## विभूतिपादः ।

देशबन्धश्चित्तस्य धारणा । १॥ तत्र प्रत्ययैकता-
नता ध्यानम् ।२॥ तदेवार्थमात्रनिर्भासं स्वरूपशून्य-
मिव समाधिः । ३॥ त्रयमेकत्र संयमः ॥४ तज्जयात्
प्रज्ञाऽऽलोकः ।५॥ तस्य भूमिषु विनियोगः ।६॥ त्रय-
मन्तरङ्गं पूर्वेभ्यः ।७॥ तदपि बहिरङ्गं निर्वीजस्य ।८॥
व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षण-
चित्तान्वयो- निरोधपरिणामः । ९ ॥ तस्य प्रशान्त-
वाहिता संस्कारात् । १० ॥ सर्व्वार्थतैकाग्रतयोः क्षयो-
दयौ चित्तस्य समाधिपरिणामः ।११॥ शान्तोदितौ-
तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः । १२॥ एतेन
भूतेन्द्रियेषु धर्म्मलक्षणावस्थापरिणामा व्याख्याताः ।१३॥
शान्तोदिताव्यपदेश्यधर्म्मानुपाती धर्म्मी ।१४॥ क्रमान्यत्वं
परिणामान्यत्वे हेतुः ।१५॥ परिणामत्रयसंयमादतीता-

नागतज्ञानम् ।१६॥ शब्दार्थप्रत्ययानामितरेतराध्यासात्
संकरस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम् ।१७॥
संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम् ।१८॥ प्रत्ययस्य
परचित्तज्ञानम् ।१९॥ न च तत्सालम्बनं तस्याविषयी
भूतत्वात् ।२०॥ कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे
चक्षुःप्रकाशासंप्रयोगेऽन्तर्द्धानम् ।२१॥ सोपक्रमं निरु-
पक्रमं च कर्म्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा
।२२॥ मैत्र्यादिषु बलानि ।२३॥ बलेषु हस्तिबलादीनि
।२४॥ प्रवृत्त्यालोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्
।२५॥ भुवनज्ञानं सूर्य्ये संयमात् । २६॥ चन्द्रे तारा-
व्यूहज्ञानम् ।२७॥ ध्रुवे तद्गतिज्ञानम् ।२८॥ नाभि-
चक्रे कायव्यूहज्ञानम् ।२९॥ कण्ठकूपे क्षुत्पिपासा-
निवृत्तिः ।३०॥ कूर्म्मनाड्यां स्थैर्य्यम् ।३१॥ मूर्द्धज्योतिषि
सिद्धदर्शनम् ।३२॥ प्रतिभाद्वा सर्वम् ।३३॥ हृदये चित्त-
संवित् ।३४॥ सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्यया-
विशेषो भोगः परार्थ्यात् स्वार्थसंयमात् पुरुषज्ञानम् ।
३५॥ ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते।
३६॥ ते समाधावुपसर्गाव्युत्थाने सिद्धयः ।३७॥ बन्धकारण-
शैथिल्यात् प्रचारसवेदनाच्च चित्तस्य परशरीरावेशः ।
३८॥ उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च

।३९॥ समानजयाज्ज्वलनम् । ४०॥ श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम् ।४१॥ कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् । ४२॥ वहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ।४३॥ स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ॥ ४४ ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च ।४५॥ रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत् ।४६॥ ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ।४७॥ ततो मनोजवित्वं विकरणभावः प्रधानजयश्च।४८॥ सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्व्वभावाधिष्ठातृत्वं सर्व्वज्ञातृत्वञ्च ।४९॥ तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ।५०॥ स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् ।५१॥ क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् । ।५२॥ जातिलक्षणदेशैरन्यताऽनवच्छेदे तुल्ययोस्ततः प्रतिपत्तिः ।५३॥ तारकं सर्वविषयं सर्व्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् ।५४॥ सत्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति ।५५॥

इति विभूतिपादः ।

—०—

# कैवल्यपादः ।

जन्मौषधिमन्त्रतपः समाधिजाः सिद्धयः । १॥ जात्यन्तरपरिणामः प्रकृत्यापूरात् । २॥ निमित्तम-प्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् । ३॥ निर्म्माणचित्तान्यस्मितामात्रात् ४ ॥ प्रवृत्तिभेदे प्रयो-जकं चित्तमेकमनेकेषाम् ।५॥ तत्र ध्यानजमनाशयम् । ।६॥ कर्म्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ।७॥ ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् । ८॥ जातिदेशकालव्यवहितानामप्यानन्तर्य्यं स्मृतिसंस्कारयो-रेकरूपत्वात् ।९॥ तासामनादित्वं चाशिषो नित्यत्वात् । १०॥ हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ।११॥ अतीतानागतं स्वरूपतोऽस्त्यध्वभेदात् तद्धर्म्माणाम् ।१२॥ ते व्यक्तसूक्ष्मगुणात्मानः ॥१३ परि-णामैकत्वात् वस्तुतत्त्वम् ।१४॥ वस्तुसाम्येऽपि चित्तभेदात् तयोर्विभक्तः पन्थाः । १५ ॥ न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात् ।१६॥ तदुपरागापेक्षित्वात् चित्तस्य वस्तुज्ञाताज्ञातम् । १७ ॥ सदा ज्ञाताश्चित्तवृत्त-यस्तत्प्रभोः पुरुषस्यापरिणामित्वात् ।१८॥ न तत् स्वाभासं दृश्यत्वात् ।१९॥ एकसमये चोभयानवधारणम्

।२०॥ चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च
।२१॥ चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धि-
सम्वेदनम् ।२२॥ द्रष्टृदृश्योपरक्तं चित्तं सर्व्वार्थम् ।२३॥
तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात्
॥२४ विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः ॥ २५
तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् २६॥ तच्छिद्रेषु
प्रत्ययान्तराणि संस्कारेभ्यः २७॥ हानमेषां क्लेशवदुक्तम्
।२८॥ प्रसंख्यानेऽप्यकुसीदस्य सर्व्वथा विवेकख्यातेर्धर्म्म-
मेघः समाधिः ।२९॥ ततः क्लेशकर्म्मविनिवृत्तिः ।३०॥
तदा सर्व्वावरणमलापेतस्य ज्ञानस्यानन्त्याज् ज्ञेयमल्पम्
।३१॥ ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम्
।३२॥ क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः
।३३॥ पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं
स्वरूप प्रतिष्ठा वा चितिशक्तिरिति ।३४॥

इति कैवल्यपादः ।

समाप्तोऽयं पातञ्जलसूत्रपाठः ।

# अकारादिवर्णानुक्रमेण सूत्राणां सूची ।

पाद-सूत्रयोः संख्याङ्काः

इति सूत्रसूची समाप्त।

# विज्ञापन

| | | | |
|---|---|---|---|
| १। | सटीक सांख्यसार | ... | ॥० |
| २। | सटीक सांख्य कारिका गौड़पादभाष्य समेत | ... | ॥० |
| ३। | वेदान्तसार ( रामानुजकृत ) | | १॥० |
| ४। | सर्व्वदर्शन संग्रह ( यन्त्रस्थ ) | | ५॥० |

प्राप्तिस्थान— संस्कृत पुस्तकालय, ५८ नं कर्णओयालिस ष्ट्रीट, कलिकाता।

# पातञ्जलदर्शनम्।

॥ ओं ॥

वन्दे क्लेशाद्यसंसृष्टं पुराणपुरुषं हरिम्।
प्रकृत्या सीतया जुष्टं योगेशं योगदायिनम् ॥ १ ॥

पतञ्जलिं सूत्रकृतं प्रणम्य
व्यासं मुनिं भाष्यकृतं च भक्त्या।
भाष्यानुगां योगमणिप्रभाऽऽख्यां
वृत्तिं विधास्यामि यथामतीद्धाम् ॥ २ ॥

इह खलु भगवान् पतञ्जलिः प्रेक्षावत्प्रवृत्त्यङ्गं शास्त्रप्रतिपाद्यं दर्शयति—

**अथ योगानुशासनम् ॥ १ ॥**

अत्र अथ शब्द आरम्भार्थः, योगशास्त्रमारभ्यत इत्यर्थः। यद्यपि हिरण्यगर्भेण शास्त्रं कृतं तथाऽपि तद्विस्तृतमिति मत्वा तदनुसृतं शास्त्रमारभ्यत इति द्योतयति अनुशासनमिति। अत्र सूत्रे "योगः"

शास्त्रप्रतिपाद्य उक्तः, अर्थात्तज्जिज्ञासुरधिकारी फलं तु योगस्य कैवल्यं यथायोगं तेषां सम्बन्ध इत्यनुबन्धचतुष्टयं द्रष्टव्यम्। तत्र योगो द्विविधः, संप्रज्ञातोऽसंप्रज्ञात श्चेति। स च चित्तस्य धर्मः, वृत्तीनां चित्तधर्मत्वेन तन्निरोधरूपयोगस्यापि तद्धर्मत्वात्। तस्य चित्तस्य पञ्च भूमयः, क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति। रजसाऽत्यन्तं चलं क्षिप्तं दैत्यानां; तमसा निद्रादिमन्मूढं रक्षसां; क्षिप्ताद्विशिष्टं विक्षिप्तं देवादीनाम्; अत्यन्तचलचित्तस्य कादाचित्कं स्थिरत्वं विशेषः। तत्र क्षिप्तमूढयो र्योगगन्धोऽपि नास्ति। विक्षिप्ते तु चित्ते कादाचित्को योगः प्रचुरविक्षेपवह्निदग्धोऽप्रतिष्ठितो निष्फलो न योगपक्षे वर्त्तते। एकाग्रे तु सत्त्वप्रधाने एकविषयस्थिते चित्ते रजस्तमोवृत्तिनिरोधः सात्त्विकवृत्तिविशेषः संप्रज्ञातयोगो भवति। तेन शब्दानुमानाभ्यां परोक्षत्वेन ज्ञातार्थः साक्षात् क्रियते, साक्षात्कारादविद्यादिक्लेशक्षयः, ततः पुण्यपापकर्मणां दाहः, ततोऽसंप्रज्ञातः योगः सात्त्विकवृत्तेरपि निरोधः, संस्कारमात्रशेषे निरुद्धे चित्ते भवति। तदाह भाष्यकारः—"यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति, क्षिणोति च क्लेशान् कर्मबन्धनानि

ख्यापयति, निरोधमभिमुखं करोति, स संप्रज्ञातो योग
व्याख्यायत" इति ॥ १ ॥

১। (হিরণ্যগর্ভ প্রভৃতির উপদিষ্ট) যোগশাস্ত্র (পুনর্ব্বার) [illegible]

হইবে।

[illegible]

योगश्चित्तवृत्तिनिरोधः ॥ २ ॥

चित्तस्य रजस्तमोवृत्तीनां निरोधो योग इत्यर्थः । अतः संप्रज्ञाते सात्त्विकवृत्तिसत्त्वेऽपि नाव्याप्तिः । नन्वेकस्य चित्तस्य क्षिप्ताद्यनेकभूमयः कुत इति चेत्, चित्तस्य त्रिगुणात्मकत्वादिति ब्रूमः । चित्तं हि ज्ञान-सुखादि-शीलत्वात्प्रवृत्तिगुणादि-मत्त्वादालस्य-दैन्यादि- [illegible]

[illegible]

[illegible]

[illegible] क्षिप्तम् ।

यदा तु तमः प्रधानं चित्तं मूढं तदाऽश्रेयोऽधर्माज्ञाना- [illegible]

साधारणे भवतः। विक्षिप्तं तु प्रथमयोगिनः। सन्ति हि चत्वारो योगिनः, प्रथमकल्पिकः, मधुभूमिकः, प्रज्ञाज्योतिः, अतिक्रान्तभावनीय श्चेति, तेषां लक्षणं तु वक्ष्यते। यदि पुनः सत्त्वप्रधानं वितमस्कं सरजस्कं भवति तदैकाग्र्यं संप्रज्ञातयोगसिद्धयोर्मध्यमयोगिनो-श्चित्तं धर्मज्ञानवैराग्यैश्वर्यवद्भवति। यदा तु विधूत-रजस्तमोमलं शुद्धसत्त्वं चित्तं तदानीं विवेकख्यातिं कृत्वा पुरुषमात्रध्यानं धर्ममेघाख्यं करोति "तत्परं प्रसंख्यानमित्याचक्षते ध्यायिनः। चितिशक्तिरपरि-णामिन्यप्रतिसंक्रमा दर्शितविषया शुद्धा चानन्ता च" इति निश्चित्य सत्त्वगुणविकृतौ विवेकख्यातावपि विरक्तं सच्चित्तं तां निरुध्य संस्कारमात्रशेषं भवति चतुर्थस्य योगिनः। सोऽयमसंप्रज्ञातसमाधिः। अत्र हि न हि किञ्चित्प्रज्ञायत इत्यलम्। चितिशक्ति-रित्याद्यनन्ता चेत्यन्तं भाष्यम्। तत्राप्रतिसंक्रमेत्यस्य बिले सर्पवद्बुद्ध्यादौ प्रविश्य न सञ्चरतीत्यर्थः। बुद्ध्या दर्शिता विषया यस्याः सा दर्शितविषया सुखदुःख-मोहशून्या शुद्धेत्यर्थः ॥ २ ॥

২। চিত্তের বৃত্তি ( প্রমাণ, বিপর্য্যয়, বিকল্প, নিদ্রা ও স্মৃতি ) সমুদায়ের নিরোধকরাকে যোগ বলে।

ननु बुद्धिवृत्तिस्वभावस्य पुरुषस्य वृत्तिनिरोधे कथं स्थितिरित्यत आह—

**तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥**

यदा चित्तस्य शान्तघोरमूढानां सर्वासां वृत्तीनां निरोधस्तदा द्रष्टुश्चिदात्मनः स्वाभाविके रूपे स्थितिः कुसुमापाये यथा स्फटिकस्य तथेत्यर्थः, पुरुषस्य चैतन्य-मात्रं स्वभावो न वृत्तय इति भावः ॥ ३ ॥

৩। সেই সময়ে অর্থাৎ চিত্তবৃত্তি নিরোধ বা নিরুত্থান সময়ে দ্রষ্টার (আত্মার বা পুরুষের) স্বীয় নির্লিপ্তরূপে অবস্থান হয়, আমি সুখী, দুঃখী ইত্যাদি জ্ঞান হয় না।

ननु तर्हि व्युत्थाने पुरुषस्य स्वभावात्प्रच्युतिः स्यादि-त्याशङ्क्याह—

**वृत्तिसारूप्यमितरत्र ॥ ४ ॥**

इतरत्र निरोधाद्व्युत्थाने सति याश्चित्तस्य वृत्तयः शान्ताऽऽद्यास्तत्सारूप्यं वृत्तिमद्बुद्ध्यविवेकात्पुरुषस्य शान्तो दुःखी मूढोऽस्मीति वृत्तितादात्म्यभ्रम इत्यर्थः, अतो न स्वभावात्प्रच्युतिः । न हि लौहित्यभ्रमकाले स्फटिकस्य श्वेतस्वभावात् च्युतिरस्तीति भावः । निरोधे मुक्तिर्व्युत्थाने बन्ध इति सूत्रद्वयतात्पर्यम् ॥ ४ ॥

৪। যোগের অন্য সময়ে চিত্ত বিষয়রূপে পরিণত হয়। যখন বৃত্তিমৎ হয়, তখন চিত্ত ও পুরুষের ( যেমন স্বচ্ছ স্ফটিক বিবিধ বর্ণ-সান্নিধ্যে সেই সেই বর্ণ ধারণ করিয়া থাকে সেইরূপ ) একরূপ বৃত্তি হয়। চিত্তের বৃত্তি সকল আত্মার বলিয়া মনে হয়।

इदानीं निरोद्धव्यानां वृत्तीनामियत्तामाह—

**वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाः ॥ ५ ॥**

राजवार्त्तिके चित्तवृत्तिनिरोधान् व्याख्यातुकामेन सूत्रकारेण सूत्रद्वयेन यस्य निरोधव्युत्थानयोर्मुक्तिबन्धौ तच्चित्तमिति व्याख्याय, "वृत्तयः" इत्यादिना वृत्तीर्व्याख्याय, अभ्यासवैराग्याभ्यामित्यादिना पादशेषेण निरोधो व्याख्यात इति विशेष उक्तः। अवयवार्थस्तयप्। वृत्तिशब्दो वृत्तिसामान्यपरः। चैत्रमैत्रादिचित्तभेदेन वृत्तिसामान्यानां बहुत्वाद्वृत्तय इति बहुवचनम्। अग्रिमसूत्रोक्ताः प्रमाणादयः पञ्च विशेषा वृत्तिसामान्यस्यावयवा इत्यर्थः। पञ्च अवयवा यासां ताः पञ्चतय्यः तासां हानोपादानसिद्धये भेदमाह—"क्लिष्टा अक्लिष्टा" इति। रागद्वेषादिक्लेशानां हेतवः क्लिष्टाः बन्धफलाः। सर्वो हि जन्तुः प्रमाणादिवृत्तिभिर्ज्ञातेष्वर्थेषु रागादिना कर्म कृत्वा सुखादिना बध्यते। "अक्लिष्टाः" क्लेशनाशिन्यो मुक्ति-

फलाः। सत्त्वपुरुषान्यतागोचराः ताः खल्वभ्यास-वैराग्याभ्यां क्लिष्टवृत्तिप्रवाहमध्ये जायमानाः स्वजन्या-क्लिष्टसंस्कारैः पुनःपुनरभ्यासेन प्रवृद्धैः क्लिष्टसंस्कार-निरोधेन क्लिष्टवृत्तिप्रवाहं निरुध्य परवैराग्येण स्वयं निरुध्यन्ते। ततः संस्कारशेषस्य चित्तस्य प्रलयो मुक्तिर्भवतीति भावः॥ ५॥

৫। চিত্তের বৃত্তি ( বিষয়াকার জন্য জ্ঞান ) পাঁচ প্রকার। ক্লিষ্ট ও অক্লিষ্ট ভেদে তাহা দুই ভাগে বিভক্ত। অবিদ্যাদি ক্লেশ যাহার কারণ এবং সংসারাবদ্ধ হয়, তাহাকে ক্লিষ্ট বলে। অক্লিষ্ট বৃত্তি ইহার বিপরীত ইহাতে সংসার বন্ধন ক্রমশঃ ক্ষীণ হয়।

पञ्चवृत्तीरुद्दिशति—

प्रमाणविपर्य्ययविकल्पनिद्रास्मृतयः॥ ६॥

इतोऽन्या वृत्तिर्नास्तीत्युद्देशसूत्रस्य फलम्॥ ६॥

৬। প্রমাণ ( যাহা হইতে যথার্থ জ্ঞান জন্মে ) বিপর্য্যয় ( ভ্রম ) বিকল্প ( আরোপ ) নিদ্রা ( সুষুপ্তি ) ও স্মৃতি ( স্মরণ ) এই পাঁচ প্রকার চিত্তবৃত্তি।

तत्र प्रमाणवृत्तिं विभजते—

प्रत्यक्षानुमानागमाः प्रमाणानि॥ ७॥

त्रीण्येव प्रमाणानीति भावः। अत्र प्रमाकरणत्वं सामान्यलक्षणम्। प्रमा चाज्ञातार्थावगाही पौरुषेयी-

बोधो वृत्तौ प्रतिबिम्बः। तत्करणं वृत्तिः। तत्रेन्द्रियसम्बन्धद्वारा चित्तस्य घटादिसम्बन्धे सति सामान्यविशेषात्मकेऽर्थे व्यक्तिरूपविशेषनिर्द्धारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणम्। तत्रार्थाकारायां वृत्तौ चिदात्मनो यः प्रतिबिम्बः सोऽपि वृत्तिद्वारा अर्थाकारः सन् फलं भवति। एवं सामान्यतो ज्ञाते परोक्षार्थे समाधिना विद्यमानविशेषवृत्तिः प्रत्यक्षप्रमाणमिति ज्ञेयम्। अनुमानागमयोर्व्याप्तिसङ्गतिग्रहापेक्षत्वाद्वह्नित्वादिसामान्ये तद्ग्रहात्सामान्यविषयत्वमेव। तत्र व्याप्तिग्रहे सति पक्षवृत्तिलिङ्गज्ञानात्साध्यताऽवच्छेदकसामान्यनिर्द्धारणवृत्तिरनुमानम्। आप्तेन दृष्टोऽनुमितो वाऽर्थो येन शब्देनोपदिश्यते तस्माच्छब्दाच्छ्रोतुस्तदर्थविषया वृत्तिरागमः। वेदस्येश्वरप्रणीतत्वं वक्ष्यते ॥ ७ ॥

১। পঞ্চবিধ বৃত্তির মধ্যে প্রমাণবৃত্তি তিনপ্রকার, প্রত্যক্ষ, অনুমান ও শব্দ।

विपर्ययं लक्षयति—

## विपर्य्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥

तत्तद्रूपे स्वविषये प्रतिष्ठाशून्यं बाधविरोधीति यावत्। विकल्पोऽपि बाधविरोधी तद्रूपाप्रतिष्ठ

इत्यतिव्याप्तिनिरासाय मिथ्याज्ञानपदं तेन स्वविषये स्वजन्यव्यवहारलोपिसर्वसम्मतबाधवत्त्वमुच्यते। न च विकल्पे तादृशबाधोऽस्ति केषाञ्चित्पण्डितानां तत्र बाधबुद्धावपि यथापूर्वं व्यवहारालोपात्। संशयस्तु लक्ष्य..एवेति नातिव्याप्तिरिति भावः। अस्यैव विपर्य्ययस्य भेदाः पञ्च क्लेशा इति वक्ष्यते ॥ ८ ॥

৮। যে জ্ঞান বিজ্ঞাত বিষয়ে স্থির থাকে না, পরিণামে বাধিত হয়, সেই মিথ্যা জ্ঞানকে বিপর্য্যয় অর্থাৎ ভ্রম বলা যায়।

विकल्पं लक्षयति—

**शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥**

नरशृङ्गादिश्रवणानन्तरमवश्यं भवत्येव निर्विषया वृत्तिर्या सा विकल्प इत्यर्थः। अयं विकल्पो वस्तुशून्यत्वान्न प्रमाणं, बाधेऽप्यवश्यभावित्वाद् व्यवहारहेतुत्वाच्च न विपर्य्ययः। यथा चैतन्यमेव पुरुष इत्यभेदनिश्चयेऽपि पुरुषस्य चैतन्यमितिभेदविकल्पः, भावातिरिक्ताभावो नास्तीति निश्चयेऽपि सर्वधर्माभाववान् पुरुष इति विशेषणविशेष्यभावविकल्पः। एवं राहोः शिर इत्यादिविकल्पा उदाहार्य्याः ॥ ९ ॥

৯। বিষয় না থাকিলেও সকলেরই "নরশৃঙ্গ" প্রভৃতি শব্দ শ্রবণ করিলে একপ্রকার জ্ঞান জন্মে তাহাকে বিকল্পবৃত্তি বলে।

निद्रां लक्षयति—

**अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥**

कार्य्यं प्रत्ययते गच्छतीति प्रत्ययो हेतुः। जाग्रत्स्वप्नवृत्तीनामभावे हेतुस्तमः आलम्बनं विषयो यस्याः सा वृत्ति"र्निद्रा"। वृत्तिपदस्यानुवर्त्तमानस्योच्चारणं ज्ञानाभावो निद्रेति मतनिरासार्थम्। तथा हि उत्थितस्य सुखमहमस्वाप्समिति स्मरणं बुद्धिसत्त्वसचिवतमो-विषयं तदनुभवं कल्पयति। दुःखमहमस्वाप्समिति स्मरणं रजस्तमोविषयं तदनुभवं कल्पयति। गाढ़मूढ़महमस्वाप्समिति केवलतमोविषयं स्मरणं तदनुभवं कल्पयति। स चानुभवो बुद्धिधर्मो निद्रा। सा चैकाग्रवृत्तिकल्पाऽपि तामसत्वाद्योगार्थिना निरोद्धव्येति भावः ॥ १० ॥

১০। চিত্তের যে অবস্থায় বাহেন্দ্রিয় জন্য জাগ্রৎবৃত্তি এবং কেবল মনোজন্য স্বপ্নবৃত্তি কিছুই হয় না, তাহাকে নিদ্রাবৃত্তি বলে, এই অবস্থায় প্রকাশের বিরোধী তমোগুণই চিত্তের বিষয় হইয়া থাকে।

स्मृतिं लक्षयति—

**अनुभूतविषयासंप्रमोषः स्मृतिः ॥ ११ ॥**

प्रमाऽद्यनुभवो हि स्मृतेः पिता तस्य विषयः

स्मृतेरात्मीयः। लोके पितुः स्वमिव पुत्रस्य। स्मृतेर्मूलानुभवाविषयस्तु परस्वं तद्ग्रहः संप्रमोषः स्तेयः। तथा चानुभूते विषये योऽयमसंप्रमोषः अधिकाग्रहः अनुभूतमात्रग्रह इति यावत्, सा स्मृतिरित्यर्थः। वृत्तिस्थः पौरुषबोधोऽनुभवः स्वप्रकाश इति तज्जन्यसंस्कारादनुभवविषयाऽपि स्मृतिर्भवति। ननु स्वकाये गजवैशिष्ट्यमननुभूतमपि स्वप्ने स्मर्यते इति चेन्न, तस्य विपर्य्ययत्वादिति भावः॥ ११॥

১১। প্রমাণবিপর্য্যয় প্রভৃতির দ্বারা অধিগত পদার্থ হইতে অতিরিক্ত পদার্থবিষয় করে না এইরূপ চিত্তবৃত্তিকে স্মৃতি বলে, সংস্কারকে দ্বার করিয়া অনুভবই স্মৃতির জনক হইয়া থাকে।

आसां वृत्तीनां निरोधोपायमाह—

अभ्यासवैराग्याभ्यां तन्निरोधः॥ १२॥

सर्वस्य जन्तोः स्वभावतश्चित्तवृत्तिर्नदी विषयभूमिगा संसारसागराभिमुखी प्रवहति। तत्र विषये वैराग्येण तत्प्रवाहं भङ्क्त्वा सत्त्वपुरुषविवेकाभ्यासेन तस्या नद्याः प्रत्यक्प्रवाहः क्रियते। अनभ्यासे हि लयविक्षेपस्वभावस्य चित्तस्य वैराग्याद्विक्षेपभङ्गे निद्रा स्यात् तस्मादभ्यासवैराग्ये लयविक्षेपनिवृत्तिरूपप्रयोजनभेदेन निरोधे कार्य्ये समुच्चीयेते॥ १२॥

১২। কথিত চিত্তবৃত্তি সকলের নিরোধ কিরূপে হইতে পারে? এই প্রশ্নের উত্তরে—অভ্যাস (বার বার অনুষ্ঠান) ও বৈরাগ্য (ভোগ্যপদার্থে অনাসক্তি) দ্বারা তাহাদের নিরোধ করিবে। অভ্যাস ও বৈরাগ্য কি তাহা পরে প্রদর্শিত হইবে।

अभ्यासस्वरूपमाह—

## तत्र स्थितौ यत्नोऽभ्यासः ॥ १३ ॥

तत्र तयोर्मध्ये रजस्तमोवृत्तिशून्यस्य चित्तस्यैकाग्रता स्थितिः, तस्यां कार्य्यायां यानि साधनानि यमनियमादीनि तद्विषयः प्रयत्नोऽनुष्ठानमभ्यास इत्यर्थः ॥ १३ ॥

১৩। যেইরূপ উপায়ের দ্বারা চিত্তের রাজস তামস বৃত্তি তিরোহিত হইয়া কেবলমাত্র সাত্ত্বিকবৃত্তির প্রবাহ উৎপন্ন হয়, যম প্রভৃতি যোগের উপায়বিষয়ে তাদৃশ যত্নকে অভ্যাস বলে।

नन्वनादिप्रबलराजसतामसवृत्तिसंस्कारैर्विरोधिभिः कुण्ठितोऽभ्यासो न स्थित्यै कल्पत इत्यत आह—

## स तु दीर्घकालनैरन्तर्य्यसत्कारासेवितो दृढभूमिः ॥ १४ ॥

तुशब्दः शङ्कानिरासार्थः। सोऽभ्यासो दीर्घकालं तपो ब्रह्मचर्य्यविद्याश्रद्धारूपसत्कारेण नैरन्तर्य्येण

चार्सेवितो दृढसंस्कारः स व्युत्थानसंस्कारैर्नाभिभूयते किन्तु स्थितिसमर्थो भवतीत्यर्थः । "अथोत्तरेण तपसा ब्रह्मचर्य्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्य" इति श्रुतिः सत्कारं दर्शयति ॥ १४ ॥

১৪। বহুকাল নিরন্তর তপস্যা, ব্রহ্মচর্য্য প্রভৃতি ভক্তিসহকারে সম্পাদিত হইলে উক্ত অভ্যাস স্থির হয়, তখন আর বৈষয়িক ব্যাপার দ্বারা অভিভূত হয় না, সুতরাং যোগরূপ স্বকার্য্যজননে সমর্থ হয়।

वैराग्यस्वरूपमाह—

दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥

यतमानव्यतिरेकैकेन्द्रियवशीकारसंज्ञास्तुतत्र । तत्र रागादीनां चित्तस्थानां कषायाणां विषयेष्विन्द्रियप्रवर्त्तकानां पाकाय प्रयत्नो यतमानसंज्ञा वैराग्यं, ततः पक्वानां केषाञ्चित्कषायाणां पच्यमानेभ्यो विभागावधारणं व्यतिरेकसंज्ञा वैराग्यं, ततः पक्वानां सर्वेषामिन्द्रियप्रवर्त्तनाशक्तानां मनस्यौत्सुक्यरूपेणावस्थानमेकेन्द्रियसंज्ञा वैराग्यं, स्त्रियोऽन्नपानमित्यादिषु दृष्टेषु, गुरूच्चारणमनुश्रवः श्रवणं यस्य सोऽनुश्रवो वेदः, तदुक्तेष्वानुश्रविकेषु, स्वर्गादिदिव्यादिव्यविषयेषु विनाशपरि

तापसातिशयत्वासूयादिदोषाणामभ्यासेन साक्षात्कारा-
द्विलक्षणस्योपेक्षाबुद्धिर्वशीकारसंज्ञा वैराग्यमित्यर्थः ॥१५

১৫। ঐহিক ও পারত্রিক সমস্ত সুখসাধন উপস্থিত হইলেও তাহাতে সম্পূর্ণভাবে অননুরক্ত থাকার নাম বৈরাগ্য।

अपरं वैराग्यमुक्त्वा परं वैराग्यमाह—

तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥

पूर्ववैराग्यमुत्तरवैराग्ये हेतुः। तथा हि वक्ष्यमाण योगाङ्गानुष्ठानादनतिशुद्धचित्तस्य विषयेषु दोषदर्शनाद्वशीकारसंज्ञकवैराग्ये सति गुर्वागमावगतस्य पुरुषस्य या ख्यातिस्तदभ्यासाद्धर्ममेघाख्यध्यानरूपाग्निताान्तविध्वस्ततमोरजोमलं चित्तं सत्त्वमात्रशेषमतिप्रसन्नं भवति। सोऽयमतिशुद्धचित्तधर्मः प्रसादो धर्ममेघस्योत्तरावधिः तस्यैव फलीभूतः, परं गुणेभ्यो वैतृष्ण्यं वैराग्यमुच्यते यं मुक्तिहेतुसाक्षात्कारं वदन्ति मोक्षविदः। यस्योदये प्रक्षीणसर्व्वक्लेशो विधूताशेषकर्म्माशयः कृतविवेकख्यातावप्युपेक्षकः कृतं कृत्यं प्राप्तं प्रापणीयमिति मन्यते योगी। तदनन्तरमेव चित्तमसम्प्रज्ञातसंस्कारमात्रशेषं भवति तत्परं वैराग्यम्। अपरन्तु वैराग्यं वितमस्कस्य रजोलेशमलस्य चित्तस्य

धर्म्मः यतः प्रकृतौ लीना ऐश्वर्य्यमनुभवन्ति। यथोक्तं "वैराग्यात्प्रकृतिलय" इति ॥ १६ ॥

১৬। বুদ্ধি প্রভৃতি হইতে নির্গুণ নিষ্ক্রিয় আত্মা পৃথক্, ইহা সম্যক্ প্রত্যক্ষ হইলে প্রকৃতি ও তাহার কার্য্য জড় বিষয়ে অনুরাগ থাকে না, ইহাকে পরবৈরাগ্য বলে।

एवमभ्यासवैराग्ये निरूप्य तत्साध्यं निरूपयन्नादौ सम्प्रज्ञातं चतुर्विधं दर्शयति—

वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः ॥ १७ ॥

यथा लोके प्राथमिकधानुष्कः स्थूलमेव लक्ष्यं विध्यति पश्चात्सूक्ष्मं तथा प्राथमिको योगी स्थूलमेव शालग्रामादिकं ध्यानेन साक्षात्करोति स स्थूल-साक्षात्कारो वितर्कः। तस्य स्थूलस्य कारणं पञ्च-तन्मात्रादिकं सूक्ष्मं तस्य ध्यानेन साक्षात्कारो विचारः। इन्द्रियाणि स्थूलानि प्रकाशकत्वात्सत्त्व-रूपाणि तेषां ध्यानेन साक्षात्कार आनन्दः। तेषां कारणं बुद्धिः पुरुषेण ग्रहीत्रैकीभूता सती अस्मिता तस्या ध्यानेन साक्षात्कारोऽप्यस्मित उच्यते। तत्र

स्थूलं च ग्राह्यमिन्द्रियाणि ग्रहणानि अस्मिताऽऽख्यो ग्रहीता तेषु ग्रहीतृग्रहणग्राह्येषु ध्यानपरिपाकः सम्प्रज्ञातो योगः। स च वितर्कविचारानन्दास्मिता-स्वरूपैश्चतुर्भिरनुगमाच्चतुर्विधः, सवितर्कः, सविचारः, सानन्दः, सास्मितः, इति। अत्र यथा घटज्ञानं मृद्विषयं तादात्म्यात्, तथा स्थूलयोगः स्थूलसूक्ष्मेन्द्रियास्मिता-त्रिविषयकः, सूक्ष्मयोगस्त्रयविषयकः, अन्यौ द्व्येकविषयौ, इति विशेषो भाष्यकृद्भाषितः। तत्र मृज्ज्ञानं घटा-विषयं यथा, तद्वत्सूक्ष्मादियोगाः स्थूलाद्यविषया इति मन्तव्यम्। भोजवृत्तौ तु इन्द्रियेषु सवितर्कमुक्त्वा, तन्मात्रेषु सविचारमुक्त्वा, अहङ्कारे सानन्दो, महत्तत्त्वे सास्मित इत्युक्तम्। तत्राहमिति विषयग्राहकान्तः-करणमहङ्कारः। अन्तर्मुखं सत्तामात्रे महत्तत्त्वे लीनं सत्तामात्रावभासकमस्मितेति तयोर्भेदः। ग्रहीता पुरुषः ॥ १७ ॥

১৭। কথিত অভ্যাস ও বৈরাগ্যরূপ দ্বিবিধ উপায়ের দ্বারা চিত্তবৃত্তি নিরুদ্ধ হইলে সম্প্রজ্ঞাত সমাধি কিরূপে হয়? এইরূপ জিজ্ঞাসায় বলা হইতেছে সম্প্রজ্ঞাতসমাধি বিতর্ক, বিচার, আনন্দ ও অস্মিতার সম্বন্ধে চারি প্রকার হইয়া থাকে। বিতর্ক, সবিচার, আনন্দ ও সাস্মিত।

अधुना सोपायमसम्प्रज्ञातमाह—

**विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ॥ १८ ॥**

वृत्तीनामभावो विरामः, तस्य प्रत्ययः कारणं परवैराग्यं तदभ्यासः पूर्वं उपायो यस्य स तथा। अनेन पदेनोपाय उक्तः, अन्योऽसम्प्रज्ञातः संस्कारशेषः। परं हि वैराग्यं सम्प्रज्ञातसंस्कारानप्यभिभूय स्वसंस्कारं शेषयति। स निर्बीजः समाधिः। निरालम्बनत्वात्कर्मबीजाभावाच्चेत्यर्थः ॥ १८ ॥

১৮। চিত্তের সমস্ত বৃত্তি তিরোহিত হইলে সংস্কারমাত্র অবশিষ্ট থাকে এইরূপ নিরোধকে অসম্প্রজ্ঞাত সমাধি বলে ইহার প্রধান উপায় চিত্তবৃত্তি নিরোধকরা।

अयमसम्प्रज्ञातो द्विविधो भवप्रत्ययः, उपायप्रत्ययश्च, तत्राद्यो मुमुक्षुभिर्हेयस्तमाह—

**भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥**

भूतेन्द्रियाणामन्यतमस्मिन् विकारेऽनात्मन्यात्मत्वभावनया देहपातानन्तरं भूतेन्द्रियेषु लीनाः षाट्कौशिकदेहशून्या विदेहाः। अव्यक्तमहदहङ्कारपञ्चतन्मात्रेषु प्रकृतिष्वात्मत्वभावनया लीनाः प्रकृतिलयाः। तेषां चित्तं संस्कारमात्रशेषमित्यसम्प्रज्ञातः। स तु भव-

प्रत्ययः । भवन्ति जायन्तेऽस्यां जन्तव इत्यविद्या "भवः" अनात्मन्यात्मत्वबुद्धिः स प्रत्ययो हेतुरस्य स तथा। अविद्यामूलोऽयं योगोऽन्तवत्फलः। यदाह वायुः—

शतमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः॥
बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः।
पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः।
पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते॥ इति

येषां विवेकख्यातिर्नास्ति तेषां चित्तं लीनमप्युत्थाय संसारे पतति सुप्तचित्तवदिति भावः॥ १९॥

১৯। যাঁহারা মহাভূত ও ইন্দ্রিয়কে এবং প্রকৃতি মহদাদিকে আত্মাভাবিয়া উপাসনায়সিদ্ধিলাভ করেন, সেই সিদ্ধি ভবপ্রত্যয়, অর্থাৎ অবিদ্যামূলক সুতরাং তাঁহাদের পুনর্ব্বার সংসারাবৃত্তি হইয়া থাকে।

अधुना द्वितीयमुपादेयमाह—

**श्रद्धावीर्य्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्॥ २०॥**

पुरुषगोचरा सात्त्विकी श्रद्धा तया वीर्य्यं प्रयत्नो जायते तेन यमनियमादिपरम्परया स्मृतिर्ध्यानं तेन समाधिः, तेन प्रज्ञापुरुषगोचरख्यात्यभ्यासः सम्प्रज्ञात-

स्तत: परवैराग्यादसम्प्रज्ञात:, इतरेषां मुमुक्षूणां योगिनां भवति ॥ २० ॥

২০। যোগিগণের শ্রদ্ধাদি উপায় জন্য সমাধি হইয়া থাকে। চিত্তের প্রসন্নতাকে শ্রদ্ধা বলে, তদ্দ্বারা যোগীর বীর্য্যের ( প্রযত্নের ) উৎপত্তি হইলে তত্ত্বস্মরণ অর্থাৎ ধ্যান উৎপন্ন হয়, স্মৃতি উপস্থিত হইলে চিত্ত স্থিরভাবে সমাধি করিতে পারে ( ইহা যোগের অসম্প্রজ্ঞাত সমাধি ) চিত্ত সমাহিত হইলে জ্ঞানের উৎকর্ষ হয় সুতরাং যথার্থবস্তু জানিতে পারে, এইরূপে পুনঃ পুনঃ অভ্যাস ও তদ্বিষয়ে বৈরাগ্য হইলে পরিশেষে অসম্প্রজ্ঞাত সমাধি হইয়া থাকে।

श्रद्धाऽऽदय: प्रज्ञान्ता उपायास्तत्पूर्वकोऽयमुपाय-प्रत्यय: ते चोपाया: प्राणिनां प्राक्संस्कारबलान्मृदु-मध्याधिमात्रभेदास्त्रिविधास्तथा च योगिनस्त्रयो भवन्ति मृदूपायो, मध्योपाय:, अधिमात्रोपाय:, इति । तत्र मृदूपायस्त्रिविध: ; मृदुसंवेग:, मध्यसंवेग:, तीव्रसंवेग:, इति । एवमितरावपि त्रिविधौ भवत: । एवं च नव-योगिनो भवन्ति । तेषां चिरं चिरतरं क्षिप्रं क्षिप्रतरं सिद्धयो भवन्ति, उपायतारतम्यात् । तत्र केषाञ्चित् क्षिप्रतरं सिद्धिरित्यत आह—

तीव्रसंवेगानामासन्न: ॥ २१ ॥

संवेगो वैराग्यं तेषां तीव्रम्, उपायाश्चाधिमात्रा-

स्तेषां योगिनामासन्नः समाधिरसंप्रज्ञातस्ततो मोक्ष इत्यर्थः ॥ २१ ॥

২১। কার্য্য প্রবৃত্তির মূলীভূত সংস্কার বিশেষের নাম সম্বেগ। সেই সম্বেগ যাহাদের তীব্র তাহাদের শীঘ্র সমাধি হয়। অর্থাৎ তীব্রসম্বেগ যোগীরা ই শীঘ্র সমাধি লাভ করিতে পারেন অন্যের বিলম্ব হয়।

मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ॥२२॥

तीव्रस्य संवेगस्यापि मृदुमध्याधिमात्रत्वात्ततो मृदुतीव्रसंवेगस्य योगिन आसन्नात् समाधेर्मध्यतीव्रसंवेगस्यासन्नतरादधिमात्रतीव्रसंवेगस्यासन्नतमः समाधिलाभ इति विशेष इत्यर्थः ॥ २२ ॥

২২। পূর্ব্বোক্ত তীব্র সংবেগের মৃদু, মধ্য ও অধিমাত্র প্রভেদে সমাধিলাভের ও বিশেষ হইয়া থাকে। অর্থাৎ মৃদুতীব্র সম্বেগবিশিষ্ট যোগীর আসন্নতর ও অধিমাত্রতীব্রসম্বেগবিশিষ্ট যোগীর আসন্নতম সমাধি হইয়া থাকে।

ईश्वरप्रणिधानाद्वा ॥ २३ ॥

ईश्वरे कायिकाद्वाचिकान्मानसात् प्रणिधानात् भक्तिविशेषादासन्नतमः समाधिलाभः। वाशब्दः पूर्वोक्तोपायेनास्य भक्त्युपायस्य विकल्पार्थः। भक्तेर्ध्यान-

पेयत्वादीश्वरो हि भक्त्याऽभिमुखः सन्निदमिष्टमस्या-स्त्वित्यनुगृह्णातीति भावः ॥ २३ ॥

২৩। অধীমাত্র উপায় ও তীব্রসম্বেগ হইতেই অচিরে সমাধি লাভ ও তৎফললাভ হয় এইরূপ নহে, ঐ কান্তিক ভক্তিসহকারে ঈশ্বরের উপাসনা করিলেও ফল লাভ হইয়া থাকে।

ईश्वरस्वरूपं निरूपयति—

क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २४ ॥

क्लेशाः अविद्यादयः पञ्च । कर्म धर्माधर्मौ । तयोः फलं विपाकः । फलानुकूलाः संस्कारा आशयाः ; मनस्याशेरत इति व्युत्पत्तेः। यथा नरस्य करिजन्मनि काष्ठ-भोगसंस्कारा उद्भवन्ति, अन्यथा जीवनासम्भवात् । तैः क्लेशादिभिस्त्रिभिश्चित्तस्थैः परामृष्टः सांसारिकः पुरुषश्चित्ता-विवेकेन भोक्तृत्वात् । तैः कालत्रयेऽप्यसम्बद्धः पुरुष ईश्वरः, विशेषपदेन कालत्रयासम्बन्धवाचिना मुक्तजीवे-भ्यो व्यावृत्तिः कृता । तेषां पूर्वकाले बन्धत्रयसम्बन्धात् प्रकृतौ लीनानां प्राकृतो बन्धः, भूतेन्द्रियेषु विकारेषु लीनानां विदेहानां वैकारिकः, अन्येषां देवनरादीनां दक्षिणाबन्धः, चित्ताधीनकर्मफलत्वादिति भेदः । ननु ज्ञानक्रियाशक्तिमत्त्वं परमैश्वर्यं पुरुषस्यापरिणामिनः

कथमिति? उच्यते—अस्तीश्वरस्यानादिसिद्धं शुद्धसत्त्वात्मकं चित्तं प्रधानजं निरतिशयज्ञानक्रियाशक्तिमत् स हि भगवान् संसारार्णवाज्जन्तूनामुद्धरणेच्छया तच्चित्तमुपादत्ते तद्विना ज्ञानधर्मोपदेशभक्तानुग्रहायोगात्। न च कथं चित्तोपादानात् प्रागिच्छाद्युदेतीति वाच्यम्। बीजाङ्कुरवदनादित्वात् सर्गप्रलयप्रवाहस्य यदा सर्वकार्य्यस्य प्रलयस्तदा भविष्यत्कल्पे लोकानुग्रहार्थमिदं चित्तमुपादेयमिति भगवता सङ्कल्प्यते तत्सङ्कल्पवासितं प्रधाने लीनं सत्, सर्गादौ चित्तमुद्भवति तेन चेश्वरोऽनुगृह्णातीत्यनवद्यम्। ननु तादृशचित्तसत्त्वे किं मानमिति चेत्? "स्वाभाविकी ज्ञानबलक्रिया च, एष सर्वेश्वर" इत्यादिवेदवाक्यमिति क्रमः। वेदो निरतिशयज्ञानशक्तिविशिष्टेश्वरप्रणीतोऽतः प्रमाणमिति संक्षेपः ॥२४॥

২৪। অবিদ্যা প্রভৃতি পঞ্চবিধ ক্লেশ, ধর্ম্মাধর্ম্ম, জাতি, আয়ু ও ভোগ এবং ধর্ম্মাধর্ম্মজন্য সংস্কার এই সমস্ত যাহাতে কখনও নাই এইরূপ পুরুষবিশেষকে ঈশ্বর বলে।

एवं वेदप्रमाण्यात् सिद्धः सर्व्वज्ञ ईश्वरः, तस्य सर्व्वज्ञत्वेऽनुमानमप्याह—

तत्र निरतिशयं सर्वज्ञबीजम् ॥ २५ ॥

अस्मदादीनां ज्ञानं, निरतिशयेन ज्ञानेनाविनाभूतं

भवितुमर्हति, सातिशयत्वात् । यत् सातिशयं तत् समानजातीयेन निरतिशयेन युक्तं, यथा कुम्भपरिमाणं विभुपरिमाणेन; तस्मिंश्च निरतिशयं ज्ञानं सर्वज्ञस्य बीजं ज्ञापकं, यत्र निरतिशयं ज्ञानं तत्र सर्वज्ञत्वं ज्ञायत इत्यर्थः । तस्य सामान्येन सिद्धस्य सर्वज्ञस्य श्रुत्यादिसिद्धाः शिवविष्णुनारायणमहेश्वरादिसंज्ञाः । तथा च वायुपुराणे—

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षड़ाहुरङ्गानि महेश्वरस्य ॥
ज्ञानवैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः ।
स्रष्टृत्वमात्मसम्बोधो ह्यधिष्ठातृत्वमेव च ॥
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे । इति

तथा महाभारते—

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत् ॥

इत्यादि ॥ २५ ॥

২৫। ঈশ্বরের জ্ঞান নিরতিশয়, সেই জ্ঞান হইতে অতিরিক্ত জ্ঞান কাহার নাই, ইহাই তাহাব সর্ব্বজ্ঞতার সাধক।

तस्य भगवतो ब्रह्मादिभ्यो विशेषमाह—

**पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥ २६ ॥**

पूर्वेषां सर्गादावुत्पन्नानां कालपरिच्छिन्नानां गुरुरीश्वरः। कुतः—"कालेनानवच्छेदात्" अनाद्यन्तत्वादित्यर्थः। तथा च श्रुतिः—"यो ब्रह्माणं विदधाति पूर्वं यो वेदांश्च प्रहिणोति तस्मै" इत्याद्या ॥२६॥

২৬। সেই ঈশ্বর প্রথমোৎপন্ন ব্রহ্মাদিরও উপদেশক, কারণ তিনি কালপরিচ্ছেদ্য নহেন অর্থাৎ অনাদি।

एवमीश्वरं निरूप्य तत्प्रणिधानं वक्तुं तस्य रहस्यनामामाह—

तस्य वाचकः प्रणवः ॥ २७ ॥

सुगमं सूत्रम्। ननु शब्दस्य वाचकत्वम् अभिधाऽऽख्या शक्तिः शब्दार्थयोः सम्बन्ध इत्युच्यते। सा किं सङ्केतेन क्रियते, व्यज्यते वा? नाद्यः—प्रतिकल्पं स्वतन्त्रेश्वरस्य सङ्केतभेदेन शब्दार्थाव्यवस्थाप्रसङ्गात्। न द्वितीयः—सूर्य्यादिशब्दानां पुत्रेषु पित्रा सङ्केतवैफल्यात्। न हि तत्र सङ्केतव्यङ्ग्या शक्तिरस्ति। न चासति व्यङ्ग्ये व्यञ्जकमर्थवत्, तस्मादिदं सङ्केतसूत्रं व्यर्थमिति चेत्? उच्यते—स्थितैव शक्तिः सङ्केतेन व्यज्यते, यथा स्थित एव पितृपुत्रभावो ममायं पुत्र इति वाक्येन व्यज्यते तद्वद्गवादिशब्देषु प्रलये प्रधानसाम्यं गतेषु सर्गादौ पुनः शक्त्या सहोद्गतेषु स्थितामेव

तत्तच्छब्दस्य तत्तदर्थे शक्तिमीश्वरः सङ्केतेन ज्ञापयति ; जीवानां लुप्तसंस्कारत्वात् । अधुनातनपित्रादिसङ्केतस्तु शक्तेरुत्पादकः । केचित्तु सर्वशब्दानां सर्वार्थेषु शक्तिरस्तीति पित्रादिसङ्केतोऽपि व्यञ्जकः गवादिशब्दानां तु वेदार्थव्यवस्थाऽर्थमीश्वरसङ्केतेनार्थविशेषे शक्तिर्नियम्यत इत्याहुः । सर्वथाऽपि वैदिकशब्दार्थसम्बन्धो व्यवस्थितव्यवहारतया नित्य इति सिद्धम् ॥ २७ ॥

২৭। ঈশ্বরের বোধক শব্দ প্রণব অর্থাৎ ওঁ।

एवं वाचकमुक्त्वा प्रणिधानमाह—

तज्जपस्तदर्थभावनम् ॥ २८ ॥

अस्य भाष्यमेव लिख्यते—"प्रणवस्य जपः प्रणवाभिधेयस्य चेश्वरस्य भावनं तदस्य योगिनः प्रणवं जपतः प्रणवार्थं च भावयतः चित्तमेकाग्रं सम्पद्यते । तथा चोक्तम्—

"स्वाध्यायाद्योगमासीत योगात् स्वाध्यायमामनेत् ।
स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते ॥ २८ ॥"

২৮। যোগিগণ ঈশ্বর ও প্রণবের বাচ্য ও বাচকতারূপ সম্বন্ধ বিশেষ ভাবে অবগত হইয়া বাচক প্রণবের জপ ও বাচ্য ঈশ্বরের উপাসনা করেন।

तस्येश्वरप्रणिधानस्यासन्नतमः समाधिलाभः फल-मिति पूर्वमुक्तम्। अधुना फलान्तरमपि तदनुगुण-माह—

ततः प्रत्यक्चेतनाधिगमोऽप्यन्तराया-
भावश्च ॥ २९ ॥

प्रतीपं विपरीतमञ्चति जानातीति प्रत्यग् आत्मा इत्यर्थः। अनेनेश्वराद्भेद उक्तः बुद्धेरप्यन्तरं वा। प्रत्यक् चासौ चेतनश्च तस्याधिगमः साक्षात्कारः ततः प्रणिधानाद्भवति। अपि चान्तरायाणामभावश्च भवति। ननु स्वभिन्नेश्वरप्रणिधानात् स्वसाक्षात्कारः कथं स्यात्? अभ्यासतज्जन्यज्ञानयोः षड्जादावेकविषयत्वदर्शना-दिति चेत्? उच्यते—यथैवेश्वरोऽसङ्गश्चिद्रूपः कूटस्थः क्लेशादिशून्यस्तथैव जीव इति सादृश्यादीश्वरध्यानं तद-नुग्रहद्वारा जीवस्वरूपसाक्षात्कारहेतुरित्यनवद्यम् ॥२९॥

২৯। প্রণব জপ ও প্রণবার্থ ধ্যান করিতে করিতে চিত্ত নির্ম্মল হইলে প্রত্যক চৈতন্য অর্থাৎ শরীরান্তর্গত আত্মা স্বসম্বন্ধীয় যথার্থ জ্ঞানের উপলব্ধি হয়। তখন পরসূত্রোক্ত যোগবিঘ্নসমূহ আর থাকে না।

अन्तरायानाह—

**व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥३०॥**

ये चित्तं योगाद्विक्षिपन्ति भ्रंशयन्ति ते चित्तविक्षेपाः योगस्यान्तरायाः विघ्ना नव। तत्र व्याधिर्वातपित्तश्लेष्मणामन्नरसस्येन्द्रियाणाञ्च वैषम्यं, स्त्यानं चित्तस्य लुब्धत्वेऽपि कर्मानर्हता, संशयः प्रसिद्धः, योगाङ्गाननुष्ठानं प्रमादः, आलस्यं चित्तस्य गुरुत्वादप्रवृत्तिः, अविरतिर्विषयतृष्णा, भ्रान्तिदर्शनमेककोटिको विपर्य्ययः, अलब्धभूमिकत्वं समाधिभूम्यलाभः, मधुमत्यादयः समाधिभूमयो वक्ष्यन्ते। अनवस्थितत्वं नाम लब्धायां भूमौ चित्तस्यास्थिरत्वं, पूर्व्वभूमौ हि स्थितं चित्तम् उत्तरभूमिं जयेत् तस्मादस्थिरत्वं दोष इत्यर्थः ॥ ३० ॥

৩০। যদ্বারা বিক্ষেপ জন্মে অর্থাৎ একাগ্রতা নষ্ট হয় তাহাকে অন্তরায় বলে,ব্যাধি প্রভৃতি নয়টী চিত্তের বিক্ষেপক সুতরাং অন্তরায়।

न केवलमेते विक्षेपा योगनाशकाः किन्तु दुःखादीनपि कुर्वन्तीत्याह—

दुःखदौर्मनस्याङ्गमेजयत्त्वश्वासप्रश्वासा विक्षेपसहभुवः ॥ ३१ ॥

दुःखं व्याधिजं शारीरं, कामादिजं मानसं, तद्द्वयमाध्यात्मिकम्। व्याघ्रादिजमाधिभौतिकम्। ग्रहपीड़ादिजम् आधिदैविकम्। दौर्मनस्यमिच्छाविघातात् क्षोभो मनसि। अङ्गमेजयती भावोऽङ्गमेजयत्त्वमङ्गानां कम्पनमित्यर्थः। अनिच्छतः प्राणो यं बाह्यवायुमन्तःप्रवेशयति स श्वासः समाध्यङ्गरेचकविरोधीत्यर्थः। एवमनिच्छतः कौष्ठ्यस्य वायोर्बहिर्गमनं प्रश्वासः पूरकविरोधी। एते विक्षेपैः सह भवन्ति विक्षिप्तचित्तस्य भवन्तीत्यर्थः ॥ ३१ ॥

৩১। দুঃখ, দৌর্ম্মনস্য, অঙ্গকম্পন, শ্বাস, প্রশ্বাস এইগুলি বিক্ষিপ্তচিত্তের জনক ও সমাধির শত্রু।

ईश्वरप्रणिधानादेतेषामभाव इत्युक्तमुपसंहरति—

तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ ३२ ॥

विक्षेपाणां नाशार्थमेकतत्त्वस्येश्वरस्याभ्यासो ध्यानं कार्य्यमित्यर्थः। अत्र भाष्यकारैः स्थायि चित्तं स्यात् तस्यैकाग्रता सम्पादनीयेति क्षणिकमतमाशङ्क्य सोऽह-

मिति प्रत्यभिज्ञानादिना चित्तमेकमनेकार्थावगाहि स्थायि विद्यत इति साधितम् ॥ ३२ ॥

৩২। ঐ সকল দোষ ( পূর্ব্বোক্ত বিক্ষেপ প্রভৃতি ) নিবৃত্তির নিমিত্ত কেবলমাত্র ঈশ্বরে চিত্ত নিবেশ করিবে।

तस्य चित्तस्यासूयादिमलवतो योगायोगात्तन्मल-निरासोपायानाह—

**मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्या-पुण्यविषयाणां भावनातश्चित्त-प्रसादनम् ॥ ३३ ॥**

सुखिषु प्राणिषु मैत्रीं मित्रतां, दुःखितेषु करुणां दयां, पुण्यवत्त्सु मुदितां हर्षम्, अपुण्यशब्दितपाप-वृत्तिषु उपेक्षां मध्यस्थवृत्तिं भावयेत्। तया भावनया चित्तस्य प्रसादनं भवति। सुखादिषु यथाक्रममुक्तया भावनया सात्त्विको धर्मो जायते। तेष्वीर्ष्याऽप-कारेच्छाऽसूयाद्वेषाणां चित्तमलानां विनाशात्तेन च शुक्लेन धर्मेण चित्तं प्रसन्नं भवति। प्रसन्नं च वक्ष्य-माणेभ्य उपायेभ्य एकाग्रं स्थितिपदं लभते इति तात्पर्य्यम् ॥ ३३ ॥

৩৩। সুখিগণের প্রতি মিত্রতা, দুঃখিগণের প্রতি দয়া, ধার্ম্মিক

দিগের প্রতি হর্ষ ও পাপিসমূহের প্রতি ঔদাসীন্য স্থাপন করিলে চিত্ত প্রসন্ন হয়।

इदानीं मैत्र्यादिभावनया प्रसन्नस्य चित्तस्य स्थित्युपायानाह—

**प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३४ ॥**

प्रच्छर्दनं रेचनम् रेचितस्य प्राणस्य बहिरेव विधारणम्, यथाशक्ति ताभ्यां चित्तमेकत्र लक्ष्ये स्थितिं लभते। प्राणजये चित्तस्य जयस्तयोरविभागात् प्राणायामस्य सर्वपापनिवर्त्तकत्वात् पापनिवृत्तौ चित्तं स्थिरं भवति। वाशब्दो वक्ष्यमाणोपायान्तरापेक्षया विकल्पार्थः, न तु मैत्र्यादिभावनाऽपेक्षया। तद्भावनायाः सर्वोपायसहकारित्वेन समुच्चयादिति मन्तव्यम् ॥ ३४ ॥

৩৪। নাসারন্ধ্রের দ্বারা অন্তরের বায়ু নিঃসারণ ও বিধারণ অর্থাৎ প্রাণায়াম দ্বারা চিত্তের স্থৈর্য্য সম্পাদন হয়।

उपायान्तरमाह—

**विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी ॥ ३५ ॥**

नासाऽग्रे चित्तस्य संयमाद्दिव्यगन्धसाक्षात्कारो भवति, जिह्वाऽग्रे संयमाद्दिव्यरसस्य संविद्भवति, तालुनि

रूपसंवित्, जिह्वामध्ये स्पर्शसंवित्, जिह्वामूले शब्द-संवित्, एता: संविदो गन्धादिविषयवत्य: प्रवृत्तय: शीघ्रमुत्पन्ना: सत्यो विश्वासमुत्पाद्यातिसूक्ष्मेश्वरादौ मनस: स्थितिं निबध्नन्तीत्यर्थ:। शास्त्रोक्तविशेषस्य कस्यचिदनुभवे सत्यतिसूक्ष्मेऽपि श्रद्धया संयमार्थं योग: प्रवर्त्तत इति भाव: ॥ ३५ ॥

৩৫। যোগিদিগের নাসাগ্রে চিত্তসংযম হইলে দিব্যগন্ধ এবং জিহ্বাগ্রে দিব্যরসজ্ঞান, তালুতে দিব্যরূপ, জিহ্বামধ্যে দিব্যস্পর্শ, জিহ্বামূলে দিব্যশব্দ অনুভূত হয়, এইরূপ হইলে শাস্ত্রে বিশ্বাস হয় সুতরাং চিত্তও স্থির হয়।

## विशोका वा ज्योतिष्मती ॥ ३६ ॥

अष्टदलं हृत्पद्मं रेचकेनोर्ध्वमुखं ध्यात्वा तत्कर्णिका-स्थायाम् ऊर्ध्वमुख्यां सुषुम्नाऽऽख्यनाड्यां संयमनान्मनस: संविद्भवति। तन्मन: सूर्य्येन्दुग्रहमणीनां या या प्रभा तद्रूपेणानेकधा भवति तत्सात्त्विकं ज्योतिर्मन:। तस्य कारणं सात्त्विकोऽहङ्कारो निस्तरङ्गमहोदधिकल्पो व्यापी। तस्यापि ज्योति:स्वरूपस्य संयमात्संविद्भवति। सैषा द्विविधा संविद्। ज्योतिष्मती मनोऽहङ्काराख्या ज्योतिर्विषया, विशोका दु:खशून्या, प्रवृत्तिरुत्पन्ना मनस: स्थितिहेतुरित्यर्थ: ॥ ३६ ॥

৩৬। অষ্টদলহৃৎপদ্মে প্রকাশশীলচিত্ত সত্ত্ববিষয়ে ধারণা করিলে শোকরহিতজ্যোতির্ম্ময়ী প্রবৃত্তি উৎপন্ন হয়, তাহাতেও মনের স্থৈর্য্য সম্পাদন হইয়া থাকে।

## वीतरागविषयं वा चित्तम् ॥ ३७ ॥

**व्यासशुकादीनां वीतरागं यच्चित्तं तद्विषयं तत्र धार्य्यमाणं योगिनश्चित्तं स्थितिपदं लभत इत्यर्थः ॥३७॥**

৩৭। ব্যাস-শুকাদির বিষয়-বিরক্ত-চিত্তে মন সংযমিত করিলে যোগীর চিত্ত স্থির হয়।

## स्वप्ननिद्राज्ञानालम्बनं वा ॥ ३८ ॥

**ज्ञानशब्दो ज्ञेयपरः। स्वप्ने भगवतो मूर्त्तिमत्यन्त-मनोहरामाराधयन्नेव प्रबुद्धः तत्रैव चित्तं धारयेत्। निद्रायां सुषुप्तौ यत्सुखं जायते तत्र धारयेत्। एवं स्वप्ननिद्राज्ञेयालम्बनं चित्तं स्थितिं लभते ॥ ३८ ॥**

৩৮। যোগীদিগের স্বপ্নে দেবতা মূর্ত্তিবিশেষ অথবা সাত্ত্বিকী সুষুপ্তিকে অবলম্বন করিয়াও চিত্ত স্থির হয়।

## यथाऽभिमतध्यानाद्वा ॥ ३९ ॥

**किं बहुना यदेवेष्टं शिवरामकृष्णादिरूपं तदेव ध्यायेत्। तत्र लब्धस्थितिकमन्यत्रापि स्थितिं लभते। अभिमतमनतिक्रम्य यथाऽभिमतं तस्य ध्यानादिति विग्रहः ॥ ३९ ॥**

৩৯। চিত্তে অভিলষিত যে কোন বিষয়ের ধ্যান করিলেও চিত্ত স্থির হয়।

ननु चित्तस्थितिर्जायत इत्यत्र किं ज्ञापकमित्यत्राह—

**परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ॥४०॥**

अस्य चित्तस्य सूक्ष्मे निविशमानस्य यः परमाण्वन्तो वशीकारोऽप्रतिघातः । तथा स्थूले निविशमानस्य परममहत्त्वाकाशान्तोऽप्रतिघातः । तेन परेण वशीकारेण चित्तं लब्धस्थितिकमिति ज्ञात्वा स्थित्युपायानुष्ठानादुपरमतीत्यर्थः ॥ ४० ॥

৪০। কথিত উপায়ের দ্বারা চিত্তের শুদ্ধি হইলে যোগিগণ সূক্ষ্মবিষয়ে পরমাণুপর্য্যন্তও স্থূল বিষয়ে পরমমহৎ পুরুষাদিপর্য্যন্ত স্বীয় ইচ্ছানুসারে সমাধি করিতে পারেন।

एवं चित्तस्थितेरुपाया उक्ताः । ज्ञापकश्च वशीकार उक्तः । सम्प्रति लब्धस्थितिकस्य चित्तस्य किं विषयः किं रूपश्च सम्प्रज्ञातो योगो भवत्यत उत्तरं पठति—

**क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः ॥ ४१ ॥**

यथाऽभिजातस्य कुलीनस्यातिस्वच्छस्य स्फटिकमणेर्जपाकुसुमाद्युपरक्तस्य स्वरूपाभिभवेन रक्ताद्या-

कारता भवति, तथाभ्यासवैराग्याभ्यां क्षीणरजस्तमो वृत्तिकस्य चित्तमणेः स्थूलसूक्ष्मभूतात्मकग्राह्येण ग्रहणै-रिन्द्रियैर्गृहीत्रा पूर्वोक्तास्मिताऽऽख्यपुरुषेण चोपरक्तस्य स्वरूपाभिभवेन या ग्राह्याकारताऽऽपत्तिः स संप्रज्ञातः। पूर्व्वोक्त-वितर्क-विचारानन्दास्मिताऽनुगमाच्चतुर्विषयकः प्रत्येतव्यः। अत्र सूत्रेऽर्थक्रमबलात्पाठं भङ्क्त्वा ग्राह्य-ग्रहणग्रहीतृषु तदुपरक्तस्य चित्तस्य तदञ्जनता स्वरूप-परित्यागेन तद्रूपता तस्याः सम्यगापत्तिरिति व्याख्ये-यम्। स्थूलसूक्ष्मक्रमेणैव चित्तस्य ग्रहीतृपरागात्। तत्स्थेति भिन्नं पदम्। अविभक्तिकं स्यान्तं कृत्वा क्षीणवृत्तेः तत्स्थस्येति योज्यम्। यद्वा तत्स्थं च तदञ्जनं च तस्य भावस्तत्ता। क्षीणवृत्तेस्तया समापत्ति-रित्यर्थः॥ ४१॥

৪১। জপাকুসুমাদির সন্নিধানে সচ্ছস্ফটিকাদির যেমন সেই সেই বর্ণে পরিণতি হয়, চিত্তেরও সেইরূপ বিষয়ান্তর জ্ঞান রহিত হইয়া পুরুষ ইন্দ্রিয় ও বিষয়াকার ধারণকে সমাধি বলে।

सेयं संप्रज्ञाताख्या समापत्तिः पुनरवान्तरभेदा-च्चतुर्धा भवति। सवितर्का, निर्वितर्का, सविचारा, निर्विचारा, चेति। तत्र सवितर्कायाः स्वरूपमाह—

तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का ॥ ४२ ॥

तत्र तासु समापत्तिषु मध्ये सवितर्का समापत्ति-रेषा ज्ञेया। तथा हि—गौरित्युक्ते शब्दार्थज्ञानानि त्रीण्यभिन्नानि भासन्ते। तत्र गौरिति शब्द इत्येको विकल्पः, अयं हि गौरित्युपात्तयोरर्थज्ञानयोः शब्दा-भेदविषयकः। तथा गौरित्यर्थ इत्येको विकल्पः, तत्र गौरित्युपात्तयोः शब्दज्ञानयोरर्थाभेदविषयकः। एवं गौरिति ज्ञानमित्येको विकल्पः, अयं तु गौरि-त्युपात्तयोः शब्दार्थयोर्ज्ञानाभेदगोचरः। त एते विकल्पाः, असदभेदगोचरत्वात्। एवं घटः-पट इत्यादयो विकल्पा ज्ञेयाः। तत्र शब्दज्ञानाभ्यासभेदेन विकल्पिते स्थूले गवाद्यर्थे समाहितचित्तस्य योगिनः समाधिजन्य-साक्षात्कारी यथा कल्पितार्थमेव गृह्णाति तथा सा समाधिप्रज्ञा शब्दार्थज्ञानानां विकल्पैः संकीर्णा तैस्तुल्या भवति विकल्पत्वाविशेषात् सा सङ्कीर्णा सवितर्का समापत्तिरित्यर्थः ॥ ४२ ॥

৪২। স্থূল বিষয়ে সবিতর্ক ও নির্ব্বিতর্ক এই দুই প্রকার সমাধি হইয়া থাকে, সবিতর্ক সমাধিতে শব্দ, অর্থ ও জ্ঞান ইহারা পরস্পর সঙ্কীর্ণভাবে ভাসমান হয়।

निर्वितर्कामाह—

## स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥ ४३ ॥

गवादिशब्दानां शक्तिरूपः सङ्केतो विकल्पितार्थेष्वेव लोके गृह्यते तस्य स्मृत्या शाब्दज्ञानं परार्थानुमितिश्च विकल्प एव जायते। तथा च श्रुते वाऽनुमिते वाऽर्थे श्रुत्यनुमितिरूपविकल्पमूला समापत्तिः सवितर्का भवति स्मृतिपरिशुद्धौ सत्यामर्थमात्रतात्पर्यवता चित्तेनार्थमात्राभ्यासात्सङ्केतस्मृतेस्त्यागे सति तत्कार्यस्य विकल्पस्य त्यागात्समाधिप्रज्ञा स्वीयं ग्राहकत्वं प्रज्ञारूपं यत्तेन शून्येव भूत्वाऽर्थमात्रनिर्भासादविकल्पितार्थरूपं यद्ग्राह्यं तत् स्वरूपेणैव निर्भास्यमाना निर्वितर्का समापत्तिरित्यर्थः। तत्र सवितर्कसाक्षात्कारो यस्तदपरं प्रत्यक्षं विकल्पत्वात्, निर्वितर्कप्रत्यक्षं तु परं सत्यार्थविषयत्वात्। स च सत्यार्थो गोघटादिरवयवी ज्ञेयः। अत्र परमाणुपुञ्जातिरिक्तोऽवयवी नास्तीति बौद्धमतमाशङ्क्य महानेको घट इत्यबाधितानुभवादस्ति, स चास्माकं मते भूतसूक्ष्मरूपाणां परमाणूनां परिणामः। तस्य च स्वोपादानेन भेदाभेदात्मकं तादात्म्यमिति भाष्ये साधितम् ॥ ४३ ॥

৪৩। যদি শব্দের ও অর্থের স্মৃতি বিলুপ্ত হইয়া কেবলমাত্র ধ্যেয় বস্তুই চিত্তে বর্ত্তমান থাকে তবে সে অবস্থাকে নির্ব্বিতর্ক সমাধি বলে।

## एतयैव सविचारा निर्विचारा च सूक्ष्म-विषया व्याख्याता ॥ ४४ ॥

स्थूलपरिणामघटादिषु उपादानत्वेनानुगता ये परमाणवः पञ्चतन्मात्राणां विकारा भूतरूपेण संस्थिताः सूक्ष्मास्तेषु विषयेषु स्वीयकार्य्यकारणदेशकालनानाविशेषणविशिष्टेषु स्ववाचकशब्दज्ञानाभ्यासभेदेन विकल्पितेषु या समापत्तिः सा सविचारेत्युच्यते। तेष्वेव सर्वविशेषणशून्येष्वर्थमात्रेषु परमाणुषु या समापत्तिः सा निर्विचारा। सा खलु सत्यार्थमात्रस्वरूपा समाधिप्रज्ञा स्वरूपशून्येव निर्भासते। तथा च स्थूलगोचरया सवितर्कया निर्वितर्कया च व्याख्यातया सूक्ष्मविषया सविचारा निर्विचारा च व्याख्याता भवतीत्यर्थः ॥४४॥

৪৪। পূর্ব্বোক্ত সবিতর্ক ও নির্ব্বিতর্ক নির্ণয়ের দ্বারা, সূক্ষ্ম বিষয়ক সবিচারও নির্ব্বিচার-সমাধি ও নির্ণিত হইল এইরূপ বুঝিতে হইবে।

ननु किमस्याः ग्राह्यसमापत्तेः परमाणुष्वेवावसानं, नेत्याह—

सूक्ष्मविषयत्वं चालिङ्गपर्य्यवसानम् ॥ ४५ ॥

अस्याः समापत्तेः सूक्ष्मविषयत्वमलिङ्गे प्रधाने पर्य्यवस्यति। तथा हि—पार्थिवः परमाणुर्गन्धतन्मात्रा-दितरतन्मात्राङ्गकाज्जायते। आप्यस्तु गन्धतन्मात्रवर्ज्जि-ताद्रसतन्मात्रादितरतन्मात्राङ्गकात्। तैजसस्तु गन्धरस-द्वयवर्ज्जिताद्रूपतन्मात्रादितरद्वयाङ्गकात्। वायव्यस्तु पूर्वहीनात्स्पर्शतन्मात्राच्छब्दतन्मात्राङ्गकात्। नभसः परमाणुस्त्वेकस्मादेव शब्दतन्मात्राज्जायत इति प्रक्रिया। अतो विकारेभ्यः परमाणुभ्य उपादानानि पञ्च तन्मा-त्राणि सूक्ष्माणि, तेभ्योऽप्यहङ्कारः सूक्ष्मः, तस्मादपि महान्, महतोऽपि प्रधानं, तद्धि लयं न गच्छतीत्य-लिङ्गमुच्यते। ततः परं सूक्ष्ममुपादानं नास्ति पुरुषस्य सत्त्वेऽप्यनुपादानत्वात्। पुरुषो हि भोगापवर्गार्थी सन् पुरुषार्थनिमित्तके सर्गे निमित्तमात्रं भवति। तस्मात् सूक्ष्मग्राह्यसमापत्तिः प्रधानपर्य्यन्तेति सिद्धम् ॥ ४५ ॥

৪৫। পূর্ব্বোক্ত সবিচার ও নির্ব্বিচার সমাধির বিষয় সূক্ষ্ম ইন্দ্রিয় হইতে শেষ সীমা, প্রকৃতিপর্য্যন্ত বুঝিতে হইবে।

एवं स्थूले सूक्ष्मे च ग्राह्ये चतस्रः समापत्तय उक्ताः, संप्रति तासां संप्रज्ञातत्वमुपसंहरति—

ता एव सबीजः समाधिः ॥ ४६ ॥

ग्रहणग्रहीत्रोरपि सविकल्पत्वनिर्विकल्पत्वभेदेन सानन्दा, आनन्दमात्रा, सास्मिता, अस्मिता चेति चतस्रः समापत्तयो भवन्ति, उक्तन्यायसाम्यात् । एवमष्टसमापत्तयो यास्ता एव सबीजः समाधिः संप्रज्ञातः । विवेकख्यात्यभावेन बन्धबीजसत्त्वात् सबीजत्वं द्रष्टव्यम् ॥४६॥

৪৬। পূর্ব্বকথিত সবিতর্ক, নির্ব্বিতর্ক, সবিচার ও নির্ব্বিচার এই চতুর্ব্বিধ সমাধিকে সবীজ অর্থাৎ সম্প্রজ্ঞাত সমাধি ( যোগ ) বলে।

तत्र निर्विचारसमापत्तेः फलतोऽतिशयमाह—

निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥ ४७ ॥

रजस्तमोमलापेतस्य बुद्धिसत्त्वस्य स्वच्छस्थितिरूपवृत्तिप्रवाहः . प्रधानान्तसूक्ष्मग्राह्यगोचरः यः सोऽयं निर्विचारसमाधेर्वैशारद्यं, तस्मिन् सत्यक्रमेण परमाण्वादिप्रधानान्ततत्त्वसमूहालम्बनः स्वात्मनिष्ठोऽध्यात्मप्रसादो भवतीत्यर्थः ॥ ४७ ॥

৪৭। নির্ব্বিচার সমাধির সচ্ছতা জন্মিলে চিত্তে ক্লেশ শূন্য হইয়া নির্ম্মল স্থিতি প্রবাহের সম্ভাবনা হয়, অর্থাৎ অসম্প্রজ্ঞাত সমাধির উপক্রম জন্মে।

অস্য প্রসাদস্য যোগিসম্মতাং সংজ্ঞামাহ—

ঋতম্ভরা তত্র প্রজ্ঞা ॥ ৪৮ ॥

তত্র বৈশারদ্যে সতি যা প্রজ্ঞা নির্বিচারা সমাধিজন্যা তস্য ঋতম্ভরেতি সংজ্ঞা ভবতি। ঋতমবিকল্পিতং সত্যং বিভর্ত্তীতি ব্যুৎপত্তেরিত্যর্থঃ॥ ৪৮ ॥

৪৮। কথিত সমাধি হইতে চিত্তের নৈর্ম্মল্য জন্মিলে যে জ্ঞান হয় তাহাকে ঋতম্ভরা প্রজ্ঞা বলে।

তস্যাঃ শ্রুতপ্রমাণেভ্যো বিষয়তাবিশেষমাহ—

শ্রুতানুমানপ্রজ্ঞাভ্যামন্যবিষয়া বিশেষার্থত্বাৎ ॥ ৪৯ ॥

গবাদিশব্দানাং গোত্বাদিসামান্যে শক্তিঃ ন ব্যক্তিবিশেষেষু, তেষামানন্ত্যেনাশক্যগ্রহত্বাৎ। এবং ব্যাপ্তিরপি বহ্নিত্বাদিসামান্যং গৃহ্যতে। অতঃ শ্রুতানুমানপ্রজ্ঞয়োঃ সামান্যং বস্তুবিষয়ঃ। তথা হি লোকে শব্দলিঙ্গজ্ঞানানন্তরং গোবহ্ন্যাদিবস্তুমাত্রং জ্ঞায়তে ন ব্যক্তিবিশেষ ইতি স্বসাক্ষিকমেতৎ। ঐন্দ্রিয়িকপ্রত্যক্ষং যদ্যপি গোপটাদিবিশেষবিষয়ং তথাঽপি সূক্ষ্মব্যবহিতবিপ্রকৃষ্টবস্তুবিশেষঃ সমাধিপ্রজ্ঞায়া অসাধারণো বিষয়ঃ। ন চ সূক্ষ্মাদিষু শ্রুতানুমানপ্রকাশিতেষু প্রসরন্তী সমাধিপ্রজ্ঞা, কথং স-

मूलश्रुतानुमानागोचरविशेषगोचरा स्यादिति वाच्यम् ? बुद्धेः स्वतः सर्वग्रहणशक्तत्वात् । बुद्धिसत्त्वं हि प्रकाशस्वभावं सर्वार्थग्रहणसमर्थमपि तमसाऽऽवृतं सद् मानमपेक्ष्याल्पविषयं भवति । यदा तु समाधिना विगततमःपटलं सर्वतः प्रकाशमानमतिक्रान्तमानमर्य्यादं भवति तदा प्रकाशानान्त्यात् किं नामागोचरः स्यात् । तस्मात् समाधिप्रज्ञा विशेषार्थगोचरत्वाद् मानान्तरविषयादन्यविषयेत्यर्थः । तदुक्तम्—

"प्रज्ञाप्रासादमारुह्य ह्यशोच्यः शोचतो जनान् ।
भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञोऽनुशोचति ॥" इति ।

जनान् समाधिशून्यान् मानभृत्यानित्यर्थः ॥४९॥

৪৯। সেই ঋতম্ভরাপ্রজ্ঞাবিশেষ অর্থাৎ তদ্ব্যক্তিস্বরূপ অসাধারণ ধর্ম্মকে বিষয় করে, অতএব ইহার বিষয় শ্রুতানুমান জ্ঞানের বিষয় হইতে পৃথক্ বলা যায়।

नन्वनादिना शब्दादिविषयभोगसंस्कारेणातिबलीयसाऽभिहता समाधिप्रज्ञा न स्थितिं लभत इत्यत आह—

## तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ ५० ॥

निर्विचारसमाधिप्रज्ञाजन्यः संस्कारो व्युत्थान-

संस्कारस्य प्रतिबन्धी बाधक इत्यर्थः। अनादिरपि व्युत्थानसंस्कारस्तत्त्वास्पर्शित्वात् तत्त्वस्पर्शिप्रज्ञासंस्कारेण बाध्यते। तद्बाधे व्युत्थानप्रत्यया न भवन्ति। समाधिप्रज्ञा तु भवति। ततः संस्कारः, पुनः पुनरिति समाधिसंस्कारोपचयात्सर्वात्मना क्लेशक्षये सति भोगान्निर्विण्णं चित्तं पुरुषाभिमुखं विवेकख्यातिं कृत्वा कृतकृत्यं लीनं भवति समाप्ताधिकारत्वात्, ख्यातिपर्य्यवसानं हि चित्तचेष्टितमिति ॥ ५० ॥

৫০। নির্ব্বিচার সমাধি হইতে উৎপন্ন সংস্কার অযোগী অবস্থার সংস্কার সমূহকে বিনাশ করে অর্থাৎ অযোগী অবস্থার যে কোন সংস্কার বিনষ্ট হইয়া যায় সুতরাং তখন কেবল যে কোন, প্রজ্ঞাই বিগুমান থাকে।

ननु संप्रज्ञातसमाधिप्रज्ञासंस्कारप्रचुरं चित्तं तत्प्रज्ञापरम्परामेव कुर्वत् कथं निर्बीजसमाधिं कुर्य्यादित्यत आह—

तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ॥ ५१ ॥

पुरुषख्यात्यनन्तरं परवैराग्यसंस्कारप्रचयेन तस्य संप्रज्ञातसमाधिप्रज्ञासंस्कारस्य, अपिशब्दात् प्रज्ञायाश्च

निरोधे सति सर्वस्य प्रज्ञातज्जसंस्कारप्रवाहस्य निरोधा-दवसिताधिकारत्वेन चित्तस्य कृत्याभावात् "निमित्ता-पाये नैमित्तिकापाय" इति न्यायेन निर्बीजः समाधि-र्भवति । तदुक्तम्—

"आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥" इति ।

श्रवणेन, मननेन, पुरुषमात्रध्यानाभ्यासो धर्म-मेघाख्यः तद्रसेन परवैराग्येण प्रज्ञाप्रसादात्मना, पुरुषं साक्षात्कुर्वन्निर्बीजं योगं लभत इत्यर्थः । काल-क्रमेण निर्बीजनिरोधसंस्कारप्रचये सति स्वप्रकृतौ चित्तं लीयते हेत्वभावात् । कृत्यशेषलक्षणाधिकारो हि चित्तस्य स्थितिहेतुः । न हि कृतभोगविवेकख्यातिन-श्चित्तस्य कृत्यशेषोऽस्ति । तस्माच्चित्तस्य प्रलये पुरुषः स्वरूपमात्रप्रतिष्ठः केवलो मुक्त इति सिद्धम् ॥ ५१ ॥

इति समाधिपादः ॥ १ ॥

৫১। সম্প্রজ্ঞাত সমাধিপ্রজ্ঞা এবং তজ্জন্য সংস্কার মাত্রের সম্পূর্ণ নিবৃত্তি জন্মিলে নির্ব্বীজ অর্থাৎ অবলম্বনশূন্য অসম্প্রজ্ঞাত সমাধি উৎপন্ন হয়, তাহাকেই মুক্তি বলে।

---

## साधनपादः ।

पूर्व्वस्मिन् पादे योगमुद्दिश्य लक्षणमुक्त्वा वृत्तीर्निरूप्य तन्निरोधोपायाभ्यासवैराग्ये प्रतिपाद्य चित्तस्थित्युपायान् कांश्चिदुक्त्वा द्विविधो योगः सावान्तरभेदः प्रतिपादितः। तत्राभ्यासवैराग्ये चित्तशुद्धिसाध्ये इति मत्वा तस्य शुद्धिहेतुमादौ क्रियायोगमाह—

**तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ १**

पूर्व्वपादोक्तस्य योगस्यास्मिन् पादे साधनान्युच्यन्त इत्यनयोः पादयोः सङ्गतिः। ब्रह्मचर्य्यगुरुसेवासत्यवचनकाष्ठमौनाकारमौन-स्वाश्रमधर्मद्वन्द्वसहनमिताशनादिकं तपः। न कायशोषः, धातुवैषम्ये योगविघातात्। स्वाध्यायः प्रणवश्रीरुद्रपुरुषसूक्तादीनां पवित्राणां जपो, मोक्षशास्त्राध्ययनं च। फलाभिसन्धिं विना कृतानां कर्मणां परमगुरावीश्वरे समर्पणमीश्वरप्रणिधानम्। तानि क्रियारूपो योगो योगसाधनत्वादित्यर्थः ॥ १ ॥

১। তপস্যা, স্বাধ্যায় (প্রণবাদি জপ ও মোক্ষ শাস্ত্রাধ্যায়ন) ও ঈশ্বরে কৃত সমস্ত কর্ম্মের অর্পণ করাকে ক্রিয়াযোগ বলে।

क्रियायोगस्य फलमाह—

समाधिभावनाऽर्थः क्लेशतनूकरणार्थश्च ॥ २ ॥

निबिड़ेषु क्लेशेषु सत्सु समाधिर्न सिध्यति । तस्मात् क्रियायोगः क्लेशान् तनूकृत्य समाधिं भावयति । तनूकरणं क्लेशानां सदोद्भवतां कादाचित्क उद्भवः । भावनं समाधेरुत्पादनम् । तदर्थः फलं यस्य स तथोक्तः । क्रियायोगेन क्लेशच्छिद्रेषु लब्धावसरः समाधिः विवेकख्यातिमुत्पाद्य सवासनक्लेशान् दहतीति भावः ॥ २ ॥

২। উক্ত তিন প্রকার ক্রিয়াযোগ (অবিদ্যা প্রভৃতি পঞ্চবিধ) ক্লেশকে প্রসবশক্তিরহিত অর্থাৎ অত্যন্ত দুর্ব্বল করিয়া সমাধির জনক হয়।

अथ क्लेशाः कीदृशाः कियन्तो वेत्यत आह—

अविद्याऽस्मितारागद्वेषाभिनिवेशाः
पञ्चक्लेशाः ॥ ३ ॥

क्लिश्यन्ति कर्मतत्फलप्रवर्त्तकाः सन्तः पुरुषं दुःखाकुर्वन्तीति क्लेशाः ते च पञ्चेत्यर्थः ॥ ३ ॥

৩। অবিদ্যা, অস্মিতা, রাগ, দ্বেষ ও অভিনিবেশ এই পাঁচ প্রকার মনোধর্ম্মের নাম ক্লেশ। ইহারা ধর্ম্ম ও অধর্ম্মরূপ কর্ম্ম জন্মায় সুতরাং সুখ ও দুঃখের ভোগ হইয়া থাকে।

তত্র চতুর্ণামবিদ্যাকার্য্যত্বেনাবিদ্যাऽऽत्मत्वमाह—

अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नो-
दाराणाम् ॥ ৪ ॥

उत्तरेषामस्मितादीनामविद्याक्षेत्रं प्रसवभूमिः। तेषामवान्तरभेदमाह, प्रसुप्तेति—प्रसुप्ताः, तनवो, विच्छिन्ना, उदाराः, च तेषाम्। तत्र विदेहप्रकृतिलयानां योगिनां क्लेशाः प्रसुप्ताः त्रिविवेकख्यात्मभाविना-दग्धतया शक्तिरूपेणावस्थानात् अत एवान्ते पुनरुद्भवन्ति। क्रियायोगिनां तनवः। विषयसङ्गिनां विच्छिन्ना, उदाराश्च भवन्ति। यथा चैत्रस्य यस्यां रागस्तत्र क्रोधो विच्छिन्नो रागः उदारः। एवं यत्र क्रोध उदारस्तत्र रागो विच्छिन्नः, कालेनोदारो भूत्वा पुरुषपशुं क्लेशयति। एते क्लेशा अविद्यामूलाः। तस्याः पुरुषापरोक्षख्यात्या निवृत्तौ निवर्त्तन्ते। यथा जीवन्मुक्तस्य क्लेशाः क्षीणा इति पञ्चमी क्लेशानामवस्था द्रष्टव्या ॥৪

৪। উক্ত ক্লেশপঞ্চকের মধ্যে অবিদ্যা পরবর্ত্তী অস্মিতাদি ক্লেশের ক্ষেত্র অর্থাৎ উৎপত্তিস্থল (মূল কারণ)। অস্মিতা, রাগ, দ্বেষ ও অভিনিবেশ ইহারা প্রত্যেকে প্রসুপ্ত, তনুবিচ্ছিন্ন ও উদার এই চারিভাগে বিভক্ত।

तेष्वविद्यारूपमाह—

**अनित्याऽशुचिदुःखाऽनात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥ ५ ॥**

अतस्मिंस्तद्बुद्धिरित्यर्थः । अमरा देवा इत्यनित्येषु नित्यत्वभ्रान्त्या देवत्वार्थं कर्म कृत्वा बध्यन्ते । एवमशुचौ स्त्रीकाये शुचित्वभ्रान्त्या बध्यन्ते । तदुक्तं भगवता वेदव्यासेन—

"स्थानाद्बीजादुपष्टम्भान्निष्यन्दान्निधनादपि ।
कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः ॥" इति ।

विण्मूत्रसङ्कुलं मातुरुदरं स्थानं, शुक्रशोणितं बीजम्, अन्नपरिणामश्लेष्मादिरुपष्टम्भः, सर्वद्वारैर्मलानां स्रवणं निष्यन्दः, निधनं मरणं, तेन हि श्रोत्रियकायोऽप्यत्यन्ताशुचिर्भवति । आधेयशौचत्वं स्नानानुलेपनादिना शुचित्वापादनं, तथा परिणामदुःखे भोगे सुखत्वभ्रान्तिः । अनात्मनि बुध्यादावात्मत्वख्यातिः । अविद्या तत्त्वविद्याविरोधिनीत्यर्थः । यद्यपि शुक्तिरूप्याद्यविद्याः सन्ति तथाऽपीयं चतुर्विधैवाविद्या बन्धमूलमिति भावः ॥ ५ ॥

৫। অনিত্য বস্তুতে নিত্যজ্ঞান, অশুচিতে শুচিজ্ঞান, দুঃখে সুখজ্ঞান ও অনাত্মায় আত্মজ্ঞানকে অবিদ্যা অর্থাৎ অজ্ঞান বলে।

দৃগ্দর্শনশক্ত্যোরেকাত্মতৈবাস্মিতা ॥ ৬ ॥

দৃক্শক্তিঃ পুরুষঃ, দৃশ্যত ইতি দর্শনং তচ্ছক্তিঃ বুদ্ধিঃ, শক্তিশব্দো যোগ্যতাঽর্থকঃ ভোক্তৃভোগ্যত্বযোগ্যয়োরত্যন্তবিভিন্নয়োর্দৃগ্দৃশ্যয়োরবিদ্যাকৃতৈকাত্মতা তাদাত্ম্যম্, ইবশব্দেনাহমস্মীতি ভ্রান্তিকৃতত্বং তাদাত্ম্যস্য দ্যোতয়তি। সাঽস্মিতেত্যর্থঃ। অয়ং হৃদয়গ্রন্থিরিত্যুচ্যতে ব্রহ্মবাদিভিঃ ॥ ৬ ॥

৬। দৃক্শক্তি যে, দর্শনশক্তির সহিত একীভূতের ন্যায় প্রকাশ পায়—উভয়ের সেই একীভাব প্রাপ্তির নাম অস্মিতা। অর্থাৎ বুদ্ধি ও পুরুষের অভেদ অভিমানকে অস্মিতা বলে।

অস্মিতায়াঃ কার্য্যং রাগং নিরূপয়তি —

সুখানুশয়ী রাগঃ ॥ ৭ ॥

সুখানুভবে সতি স্মৃত্যা তজ্জাতীয়সুখান্তরে তৎসাধনে বা যা তৃষ্ণা স রাগঃ। সুখমনুশেতে বিষয়ীকরোতীতি সুখানুশয়ীত্যর্থঃ ॥ ৭ ॥

৭। সুখ বা সুখের উপায়ের কামনাকে রাগ বলে।

দুঃখানুশয়ী দ্বেষঃ ॥ ৮ ॥

দুঃখানুভবিতুঃ স্মৃত্যা দুঃখতৎসাধনয়ো র্যঃ ক্রোধঃ স দ্বেষ ইত্যর্থঃ ॥ ৮ ॥

৮। যে ব্যক্তি দুঃখ অনুভব করিয়াছে তাহার দুঃখ স্মরণ-, পূর্ব্বক দুঃখ অথবা দুঃখের কারণে যে ক্রোধ হয় তাহাকে দ্বেষ বলে।

## स्वरसवाही विदुषोऽपि तथारूढ़ोऽभिनिवेशः ॥ ৯ ॥

विदुषो मूर्खस्य वा जन्तुमात्रस्य यो मरणत्रासः सोऽभिनिवेशः । यथा मूर्खस्याहं सदा स्यामिति रूढ़त्रासः तथा विदुषोऽपि रूढ़ो दृश्यते । यतः स्वरसवाही सः पूर्वजन्मस्वसक्तमरणदुःखानुभवजन्यवासनासत्त्वः स्वरसः । तेन वहति प्रवहतीति स्वरसवाही । अनेन भयेन देहातिरिक्तात्मा भाष्ये प्रसङ्गाद्दर्शितः । दृश्यते हि जातमात्रस्य बालस्य मरणाद्भयं तच्च पूर्वमरणस्मरणं विनाऽनुपपन्नमिति । एते चाविद्याऽऽदयः पञ्च, क्रमेण तमो, मोहो, महामोहः, तामिस्रः, अन्धतामिस्रः, इत्युच्यन्ते । तत्राव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वष्टस्वनात्मस्वात्मबुद्धिरविद्या तमः, अणिमाद्यष्टैश्वर्य्येषु अणुरस्मि महानस्मीति तादात्म्यं मोहः, तेन दिव्यादिव्यभेदेन शब्दादिदशविषयेषु रागो महामोहः, कुतश्चिदैश्वर्य्यविघाते तन्निमित्तकदशविषयभोगालाभे सत्यष्टादशेष्टविघातके द्वेषस्तामिस्रः, एतेषामेवाष्टादशानां

মিষ্টানাং নাশাদ্ভয়মন্ধতামিস্র, ইতি। তথা চ সাংখ্য-কারিকা—

ভেদস্তমসোঽষ্টবিধো মোহস্য চ দশবিধো মহামোহঃ।
তামিস্রোঽষ্টাদশধা তথা ভবত্যন্ধতামিস্রঃ ॥ ইতি ॥৯॥

৯। বার বার মরণদুঃখ ভোগ করায় চিত্তে পূর্ব্ব পূর্ব্ব জন্মের মরণদুঃখ অনুভব বশতঃ জ্ঞানী বা অজ্ঞানী সাধারণের যে মরণ ভয় হয় তাহাকে অভিনিবেশ নামক ক্লেশ বলে।

তে চ পঞ্চ ক্লেশা দ্বিবিধাঃ। পুরুষখ্যাত্যা দগ্ধাঃ সংস্কাররূপাঃ সূক্ষ্মাঃ, ক্রিয়াযোগেন মৈত্র্যাদিভাবনা-রূপপরিকর্মণা চ তনূকৃতাঃ স্থূলা, ইতি। তত্র সূক্ষ্মাণাং হানোপায়মাহ—

## তে প্রতিপ্রসবহেয়াঃ সূক্ষ্মাঃ ॥ ১০ ॥

চিত্তস্য কৃতকৃত্যস্যাস্মিতায়াং স্বপ্রকৃতৌ প্রলয়ঃ প্রতিপ্রসবঃ তেন হেয়াঃ সূক্ষ্মাঃ তে ক্লেশাঃ। ধর্মিনাশা-দেব তদ্ধর্মাণাং সংস্কারাণাং নাশ ইত্যর্থঃ ॥ ১০ ॥

১০। পুরুষের ভোগ ও মোক্ষ জন্মাইয়া কৃতকৃত্যচিত্ত প্রতি লোমপরিণামে নিজকারণ অস্মিতায় লীন হইলে সংস্কাররূপ সূক্ষ্ম ক্লেশ নষ্ট হয়।

स्थूलानां हानोपायमाह—

**ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥**

याः क्रियायोगेन विरलाः क्लेशवृत्तयः स्थूलाः सुखदुःखमोहात्मिकाः, ताः पुरुषध्यानेनैव हातव्या इत्यर्थः। यथा लोके वस्त्रस्यातिस्थूलो मलः प्रक्षालनेनैवादौ शोध्यते। पश्चाद्विरलः क्षारसंयोगादिना। मलवासना तु वस्त्रनाशेनैव नश्यति। तथा क्रियायोगेनातिनिविड़ाः क्लेशा विरला भवन्ति। विरलास्तु ध्यानेन तनूकृताः। सूक्ष्मास्तु चित्तनाशेन नश्यन्तीति भावः॥११

১১। কথিত ক্লেশ পঞ্চকের বৃত্তি অর্থাৎ সুখদুঃখাদি আকারের পরিণাম ও মোহস্বরূপ স্থূল বৃত্তিসকল একমাত্র ধ্যান দ্বারা তিরোহিত হয়।

क्लेशान्निरूप्य, ननु कथं तेषां क्लेशत्वमित्याशङ्क्य कर्मतत्फलमूलत्वेन बन्धकत्वात्तेषां क्लेशत्वमित्याह—

**क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ॥ १२ ॥**

अत्र त्रिभिः पदैः क्रमेण कर्मणो हेतुस्वरूप कार्य्याण्युच्यन्ते। आशेरते सांसारिकाः पुरुषा अस्मिन्नित्याशयः

कर्मणां, धर्माधर्मरूपः संस्कारः। क्लेशाः कामक्रोधादयो मूलमस्येति क्लेशमूलः। स च द्विविधः दृष्टजन्मवेदनीयः, अदृष्टजन्मवेदनीयश्चेति। येन देहेन कर्म कृतं तद् दृष्टं जन्म, तेनैव देहेन भोक्तव्य आद्यः। यथा नन्दीश्वरो बाल एव मनुष्यदेहेन तीव्रसंवेगेन मन्त्रतपःसमाधिभिरीश्वराराधनं कृत्वा सद्य एव देवत्वजातिं, दीर्घमायुः, दिव्यभोगांश्च लब्धवान्। तथा विश्वामित्रो जात्यायुषी लब्धवान्। तथा भीतव्याधितकृपणविश्वस्तमहाऽनुभावेषु कृतोऽपराधः सद्य एव पच्यते। यथा नहुषस्य महर्ष्यपराधेन सद्यः सर्पत्वमभवत्। द्वितीयस्तु जन्मान्तरभोग्यस्वर्गनरकादिहेतुः कर्माशयः इत्यर्थः॥ १२॥

১২। ধর্ম্মাধর্ম্মরূপ কর্ম্মাশয় ক্লেশমূলক অর্থাৎ ক্লেশ থাকিলেই উহারা ফল প্রদান করিতে পারে, উহারা বর্ত্তমান জন্মে অথবা ভবিষ্যৎ জন্মে ফল প্রদান করিয়া থাকে।

अयं क्षीणक्लेशानां नास्तीति विशेषमाह—

**सति मूले तद्विपाको जात्यायुर्भोगाः॥ १३॥**

क्लेशरूपे मूले सत्येव कर्मणो विपाकः फलं भवति। न ह्यक्लेशो भुङ्क्ते। न ह्यकामस्य क्वचिदपि कर्मजे

फले सुखबुद्धिरस्ति । न त्वनुद्वेगः शोचति । अतो विवेकख्यात्यग्निदग्धेषु क्लेशेषु कर्मबीजं वितुषव्रीह्यादिवत् न फलं प्रसूते । स विपाकस्त्रिविधः । जातिर्जन्म-देवत्वादिर्वा, आयुश्चिरकालं देहप्राणयोर्योगः, इन्द्रियैर्विषयानुभवो भोग, इति । तत्र भोगो मुख्यः, जात्यायुषी तच्छेष, इति विभागः । तत्रैकस्मिन् देहे विचित्र-भोगदर्शनादनेकानि कर्माणि मरणकालाभिव्यक्तानि एकं जन्मारभन्त इत्येकभविकः कर्माशय उच्यते । तस्य क्वचिज्जातिः, क्व चिदायुः, क्व चिद्भोगः, क्व चिद्-द्वयं, क्व चित्त्रयम्, इति फलवैचित्र्यं ज्ञेयम् । तदुक्तं भगवता—"गहना कर्मणो गतिः" इति । विस्तरस्तु भाष्ये द्रष्टव्यः ॥ १३ ॥

১৩। অবিদ্যা প্রভৃতি ক্লেশপঞ্চক থাকিলেই ধর্ম্মাধর্ম্মরূপ কর্ম্মাশয়ের পরিণাম জন্ম, আয়ু ও ভোগ হইয়া থাকে।

अधुना जात्यादीनां हेयत्वार्थं फलमाह—

ते ह्लादपरितापफलाः पुण्यापुण्य-हेतुत्वात् ॥ १४ ॥

ते जन्मायुर्भोगाः । पुण्यहेतुकाः सुखफलाः अपुण्यं पापं तद्धेतुका दुःखफला । अत्र भोगो विषयानुभवः ।

मिश्रास्तु—'सुखदुःखानुभवो भोगः तस्य कर्मतया साध्यत्वेन सुखदुःखे फले गमनस्येव ग्रामः' इत्याहुः ॥ १४ ॥

১৪। জন্ম, আয়ু ও ভোগ ইহারা পুণ্যের দ্বারা সম্পাদিত হইলে দুঃখের কারণ হয়।

ননু তে দুঃখফলা হেয়া ভবন্তু সুখফলাস্তু কথং হেয়া ইত্যত আহ—

परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च
दुःखमेव सर्वं विवेकिनः ॥ १५ ॥

परिणामोऽन्यथाभावः । तापो वर्त्तमानः । संस्कारो भूतः । एतान्येव दुःखानि तैरिति विग्रहः । तथा हि—विषयसुखभोगात्कामानलो वर्द्धते । वृद्धौ सत्यां काम्यालाभे दुःखमवश्यं भावि । लाभेऽपि कुतश्चिद्भोग सङ्कोचे दुःखम् । सङ्कोचके द्वेषः । ततः कामद्वेषाभ्यां पापोपचयाद् दुःखम् । असङ्कोचे व्याधिः पापञ्च । ततो दुःखमेवं भोगस्य परिणामदुःखता । तथा सुखभोगकाले विषयनाशभीत्या दुःखं वर्त्तते । नाशके द्वेषाच्च तापोऽस्तीति तापदुःखता भोगस्य । तथा सुखभोगनाशे संस्कारो भवति तेन स्मृत्या रागे सति पुण्यापुण्योपचयात्सुखदुःखभोगः पुनः संस्कार इत्यनन्ता

दुःखसन्ततिः यदि भोगनाशे संस्कारो न स्यात् तदा न दुःखसन्ततिः। भवत्येव तु संस्कार इति संस्कार-दुःखता। इमानि दुःखानि विवेकिनोऽक्षिपात्रकल्पस्य योगिन उद्वेजकानि, न तु कठिनचित्तानां कर्मिणाम्। यथाऽक्षिपात्रं मृदुकल्पः ऊर्णातन्तुरपि उद्वेजयति नान्यमवयवम्। तस्माद्विवेकिनः सर्वमेव भोगसाधनं विषमिश्रान्नवद्दुःखमेव परिणामतापसंस्कारदुःखैर्योगाद् गुणवृत्तिविरोधाच्च। गुणाश्चित्तात्मना परिणतानि सत्त्व-रजस्तमांसि तेषां वृत्तयः सुखदुःखमोहाः, तासां विरोधः परस्परमभिभाव्याभिभावकत्वं तस्मादित्यर्थः। चलं हि गुणवृत्तं तत्र चित्ते या गुणवृत्तिराविर्भवति धर्मोद्भवात्मा पुनरधर्मोद्भवादधर्माभिभवे सति तिरो भवति। दुःखत्वं स्वाभाविकं स्वस्याः स्फुटयति स्वभावतो दुःखरूपैव सुखवृत्तिः दुःखात्मकरजोमिश्रसत्त्वपरिणामत्वात् किन्तु स्वकाले सत्त्वप्राधान्यात्तस्याः दुःखत्वमस्फुटं रजसः सत्त्वतिरोभावे सति स्फुटेयमिति सुखदुःखयोर्भेदव्यपदेशः। एतेन सुखस्य मोहत्वं व्याख्यातम्। अतो गुणपरिणामात्मकं सर्वमेव जगद्दुःखमोहात्मकं हेयमिति सिद्धम् ॥ १५ ॥

১৫। বিবেকশালী যোগীর পক্ষে বিষয় মাত্রই দুঃখাকর কারণ

ভোগের পরিণাম ভাল নহে, ক্রমে তৃষ্ণার বৃদ্ধি হয়; ভোগকালেও বিরোধীর প্রতি বিদ্বেষ হয়, এবং ক্রমে ভোগসংস্কার বৃদ্ধি হইতে থাকে। চিত্তের সুখ দুঃখ মোহস্বরূপ বৃত্তিসকল ও পরস্পর বিরোধী কিছুতেই শান্তি নাই।

তত্র যথা চিকিৎসাশাস্ত্রে রোগঃ, রোগহেতুঃ, আরোগ্যং, তদ্ধেতুরিতি চতুষ্টয়ং ব্যুৎপাদ্যং তথাঽস্মিন্নপি শাস্ত্রে হেয়ং, হেয়হেতুঃ, মোক্ষঃ, তদ্ধেতুরিতি, চতুষ্টয়ং ব্যুৎপাদয়িতুং বিশিষ্য হেয়ং দর্শয়তি—

হেয়ং দুঃখমনাগতম্ ॥ ১৬ ॥

অতীতস্য দুঃখস্য ভোগেন গতত্বাদ্বর্ত্তমানদুঃখস্য ভোগেনৈব ক্ষয়াদনাগতমেব দুঃখং হেয়মিত্যর্থঃ ॥ ১৬ ॥

১৬। ভবিষ্যতে যে দুঃখ হইবে তাহারই ত্যাগ করা বিধেয়, অর্থাৎ যাহাতে পরিণামে দুঃখ না হয় সেরূপ চেষ্টা করিবে।

হেয়হেতুমাহ—

দ্রষ্টৃদৃশ্যয়োঃ সংযোগো হেয়হেতুঃ ॥ ১৭ ॥

দ্রষ্টা চিদ্রূপঃ পুরুষো বুদ্ধিস্থস্বচ্ছায়াঽঽত্মকদর্শনবান্। দৃশ্যং বুদ্ধিসত্ত্বম্। তয়োঃ সংযোগঃ স্বস্বামিভাবঃ। বুদ্ধিসত্ত্বং হি বিবিধশব্দাদ্যাকারেণেন্দ্রিয়াদিদ্বারা পরিণতং চিচ্ছায়াঽঽপত্ত্যা পুরুষাভেদেন দৃশ্যমানং

सन्निधिमात्रेणायस्कान्तमणिवदुपकारकं स्वनिष्ठभोगापवर्गौं पुरुषं दर्शयत् स्वं भवति पुरुषस्य स्वामिनः । सोऽयमभेदभ्रान्तिरूपाविद्याकृतः पुरुषार्थाधीनस्थितिकः संयोगो हेयस्य दुःखस्य हेतुरित्यर्थः ॥ १७ ॥

১৭। পুরুষ ( আত্মা ) ও বুদ্ধির ( প্রকৃতির ) সংযোগ অর্থাৎ পুরুষ ভোক্তা বুদ্ধিভোগ্য এইরূপ সম্বন্ধই সংসারের কারণ।

दृश्यं प्रपञ्चयति—

प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ॥ १८ ॥

प्रकाशशीलं सत्त्वम् । क्रियाशीलं रजः । स्थितिः प्रकाशक्रिययोः प्रतिबन्धः तच्छीलं तमः । तत्र सत्त्वं मृदुत्वात्तप्यम् । तापकं रजः । एवं सत्त्वरजसोस्तप्यतापकभावे सति मोहो भवति पुरुषस्य ममतयेति । तदिदं गुणत्रयं स्वस्वकार्य्यं मिथःसहायमविवेकि भोग्यं विवेकित्याज्यं परस्पराभिभावकं परस्पराङ्गाङ्गिभावं सुखप्रकाशलाघवदुःखक्रियोपष्टम्भमोहावरणगौरवकार्य्यलक्षणज्ञेयभेदं स्वतः परस्पराविभागाद् दुर्ज्ञानभेदं प्रधानशब्दवाच्यं भूतेन्द्रियात्मकम् । भूतानि स्थूलानि तन्मात्राणि, इन्द्रियाणि ज्ञानकर्मेन्द्रियाणि दश, बुद्ध्यहङ्कार-

মনাংসি শ্রোণ্যন্তঃকরণানি, আত্মা স্বাভিন্নঃ পরিণামো যস্য তদ্ভোগাপবর্গার্থং ভোগমোক্ষপ্রয়োজকং দৃশ্যমিত্যর্থঃ ॥ ১৮

১৮। সত্ব রজঃ ও তমঃ এই গুণত্রয়কে দৃশ্য বলে, সত্বের স্বভাব প্রকাশ, রজের স্বভাব ক্রিয়া ও তমের স্বভাব স্থিতি, ভূতরূপে ও ইন্দ্রিয়রূপে ইহাদের পরিণাম হয়, উক্ত দৃশ্য পুরুষের ভোগ ও অপবর্গ ( মোক্ষ ) সম্পাদন করে।

এতেষাং গুণানাং পরিণামং বিভজ্য দর্শয়তি—

বিশেষাऽবিশেষলিঙ্গমাত্রালিঙ্গানি
গুণপর্বাণি ॥ ১৯ ॥

বিশিষ্যন্ত ইতি বিশেষা ব্যাবৃত্তাঃ ষোড়শবিকারাঃ খবায়ুতেজোऽম্বনয়ঃ স্থূলভূতানি পঞ্চ, জ্ঞানকর্মেন্দ্রিয়াণি দশ, মনঃ, চেত্যেতে ষোড়ষবিকারা এব ন তত্ত্বান্তরপ্রকৃতয়ঃ এতেষাং বিকারাণাং প্রকৃতয়ো বুদ্ধের্বিকৃতয়ঃ ষড়বিশেষাঃ পঞ্চতন্মাত্রাহঙ্কারাঃ। অহঙ্কারাৎপঞ্চতন্মাত্রাণীতি সাংখ্যাঃ। মহত্তত্ত্বাদহঙ্কারস্যানুজানি বুদ্ধেরপত্যানি তন্মাত্রাণীতি যোগাঃ। তত্র পঞ্চতন্মাত্রাণি শব্দস্পর্শরূপরসগন্ধাখ্যানি স্থূলভূতানাং প্রকৃতয়ঃ। অহঙ্কারঃ সত্ত্বেন রজসা উভয়েন জ্ঞানকর্মেন্দ্রিয়মনসাং প্রকৃতিঃ। লয়ং গচ্ছতীতি লিঙ্গং তন্মাত্রং মহত্তত্ত্বং, মাত্রপদেন চ

विशेषाऽविशेषाभ्यां वैलक्षण्यं द्योत्यते। तद्धि निर्विकल्प-काऽध्यवसायात्मकं प्रधानस्याद्यकार्य्यम्। अलिङ्गं गुणानां साम्यावस्थारूपं प्रधानम्। एतानि चत्वारि गुणानां पर्वाणि परिणामाः गुणत्वं चेतनं प्रति शेषत्वं मन्तव्यम्१९

১৯। গুণের স্বরূপ চারিপ্রকার, বিশেষ অর্থাৎ একাদশ ইন্দ্রিয় ও পঞ্চমহাভূত, অবিশেষ পঞ্চতন্মাত্র ও অহঙ্কার লিঙ্গমাত্র মহত্তত্ত্ব ও অলিঙ্গ অর্থাৎ প্রধান।

एवं दृश्यं निरूप्य द्रष्टारं निरूपयति—

द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥२०॥

द्रष्टा पुरुषो दृशिमात्रश्चिन्मात्रो न ज्ञानादिधर्मकः। अतः शुद्धोऽपरिणाम्यपि प्रत्ययं बुद्धिवृत्तिमनुसृत्य पश्यतीति प्रत्ययानुपश्यः स्वस्य बुद्ध्याविवेकाद्वृत्तिभिरेकीभूतः शब्दादीन् पश्यतीत्यर्थः। तदुक्तं—"वृत्तिसारूप्यमितरत्र" इति ॥ २० ॥

২০। পুরুষ (আত্মা) জ্ঞানস্বরূপ স্বভাবতঃ নিগু'ণ ক্রিয়াশূন্য; বুদ্ধিবৃত্তির আরোপ হওয়ায় সগুণ বলিয়া প্রতিভাত হয়।

एवं दृश्यद्रष्टारावुक्त्वा तयोः शेषशेषित्वमाह—

तदर्थ एव दृश्यस्यात्मा ॥ २१ ॥

दृश्यस्य भोग्यस्य स्वरूपं द्रष्टुरर्थमेव न स्वार्थम् अचेतनत्वादित्यर्थः ॥ २१ ॥

২১। বুদ্ধি প্রভৃতি সমস্ত ভোগ্য জড়বর্গের স্বরূপ পুরুষার্থ হইলেও বুদ্ধিবৃত্তির আরোপ হওয়ায় সগুণের ন্যায় ভাসমান হয়।

ननु तर्हि द्रष्टुः प्रयोजने निष्पन्ने सति कृत्याभावादद्दश्यं प्रधानं निर्व्यापारं स्यात् तथा चाधुना संसारो नोपलभ्येतेत्यत आह—

**कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥ २२ ॥**

प्रधानमेकं पुरुषा अनन्ता इति स्थितिः। "अजामेकाम्" इति श्रुतेः। तत्र प्रधानं यं पुरुषं प्रति भोगापवर्गौ कृतवत् स कृतार्थः स्वामित्वात्। यथा भृत्येन कृतजयेन स्वामी कृतजय इत्युच्यते। तद्वत्तं कृतार्थं मुक्तपुरुषं प्रति नष्टमदर्शनं गतमपि तद्दृश्यमनष्टं पुरुषान्तरसाधारणत्वात्। एतदुक्तं भवति पुरुषार्थो ह्यनागतावस्थः प्रधानस्य प्रवृत्तिहेतुः। तत्र कृतार्थं प्रति प्रवर्त्तकाभावात्प्रधानस्याप्रवृत्तावपि अकृतार्थं प्रति मद्दादाद्याकारेण प्रवृत्तिर्घटते। तथा चैकस्य मुक्तौ सर्वेषां मुक्तिप्रसङ्गो नास्तीति ॥ २२ ॥

২২। মুক্ত পুরুষ সম্বন্ধে যদিও প্রধান (প্রকৃতি) কোন কার্য্যই সম্পন্ন করে না, তথাপি তদ্ভিন্ন বদ্ধ পুরুষের ভোগাপবর্গ সম্পাদন করে, অতএব প্রধান অনিত্য নহে।

एवं दृश्यद्रष्टारौ व्याख्याय हेयहेतुं संयोगं निरूपयति—

स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥ २३ ॥

स्वं दृश्यं तस्य शक्तिर्जड़त्वेन दृश्यत्वयोग्यता। स्वामी तु पुरुषः, तस्य शक्तिश्चेतनत्वेन द्रष्टृत्वयोग्यता स्वरूपात्मिकैव। तयोः स्वस्वामिस्वरूपयोः शक्त्योः विविधशब्दाद्याकारदृश्यबुद्धिस्वस्वरूपस्योपलब्धिर्भोगः। स्वामिस्वरूपस्योपलब्धिरपवर्गः। तद्धेतुः संयोगः स्व-स्वामिभावाख्यः। स एव द्रष्टृदृश्यभावो भोक्तृभोग्यभाव इत्याख्यायते। यस्याभावे दृग्दृश्ययोः स्वरूपोपलब्धिर्न भवति यद्भावे सा भवति, स संयोगः, कार्य्येणैव ज्ञेय इत्युपदिष्टं भवति ॥ २३ ॥

২৩। কথিত ভোগ্য ভোক্তৃত্ব সম্বন্ধরূপ সংযোগদৃশ্য ও পুরুষের সাক্ষাৎকারের কারণ। দৃশ্যের সাক্ষাৎ কারকে ভোগ ও পুরুষের সাক্ষাৎকারকে মুক্তি বলে।

एवं संयोगस्य स्वरूपं कार्य्यं चोक्त्वा कारणमाह—

तस्य हेतुरविद्या ॥ २४ ॥

भ्रान्तिज्ञानवासना संयोगस्य कारणमित्यर्थः। अहमिति दृग्दृश्ययोरभेदप्रत्ययो भ्रान्तिः। तद्वासना-

বাসিতং চিত্তং প্রলয়ে লীনং প্রধানভাবমুপগতং সর্গকালে পুরুষং প্রতি স্বস্বেনৈব জায়তে। তেন সংযোগেনাবিবেকিনো বন্ধো বিবেকিনো মোক্ষশ্চ ভবতি এতয়া অনাদিবাসনা-বিচিত্রয়া চিত্তবর্তিন্যা অবিদ্যয়া সমম্। ততো মৎস্যজালমিবানুবিদ্ধং পুরুষপশুং স্বকর্মোপহিতং দুঃখ-মুপাত্তং ত্যজন্তং, ত্যক্তমুপাদদানং, হাতব্য এবানাত্মন্য-হঙ্কারমমকারানুপাতিনং জাতং জাতং বাহ্যাধ্যাত্মিকো-ভয়নিমিত্তাস্ত্রিপর্বাণস্তাপা অনুপ্লবন্তে ॥ ২৪ ॥

২৪। চৈতন্যের (পুরুষের) সহিত বুদ্ধিসংযোগের প্রতি অবিদ্যা অর্থাৎ মিথ্যাজ্ঞানজন্য অনাদি সংস্কারই কারণ।

এবং হেয়ং তদ্ধেতুং চোপপাদ্য হেয়স্য হানং মোক্ষং ব্যুৎপাদয়তি—

তদভাবাৎসংযোগাভাবো হানং তদ্ দৃশেঃ কৈবল্যম্ ॥ ২৫ ॥

তস্যা অবিদ্যায়াঃ অভাবাদ্বিদ্যয়া নাশাত্তৎকার্যস্য বুদ্ধিপুরুষসংযোগস্য দুঃখস্য হেয়স্য হেতোরভাবো বিনাশো হানং যত্তদেব দৃশের্নিত্যমুক্তস্য কৈবল্যমিত্যর্থঃ ॥২৫॥

২৫। আত্মজ্ঞানের দ্বারা কথিত অবিদ্যার বিনাশ হইলে প্রকৃতি পুরুষের সংযোগ অর্থাৎ পূর্ব্বোক্ত সম্বন্ধ বিশেষের বিনষ্ট হয়; তাহাকে হান বা মুক্তি বলে, তাহাই পুরুষের স্বরূপে অবস্থান।

मोक्षमुक्त्वा तद्धेतुमाह—

**विवेकख्यातिरविप्लवा हानोपायः ॥ २६ ॥**

दृग्दृश्ययोर्भेदो विवेकस्तस्य ज्ञानं ख्यातिः। विप्लवो मिथ्याज्ञानम्। आदौ खल्वागमात्सामान्यतो विवेकख्यातिरुदेति साऽनाद्यविद्यां न हन्ति, परोक्षत्वात्। यदा सा मननेन स्थापिता सती सर्वतो विरक्तेन पुरुषाभिमुखेन चित्तेन निरन्तरमभ्यस्यते तदा ध्यानप्रकर्षपर्यन्तजा चित्प्रतिबिम्बवती साक्षात्काररूपा सवासनमिथ्याज्ञानं निघ्नन्त्यविप्लवा सती परवैराग्यपूर्व्वकनिरोधेन संस्कारशेषस्य कृतकृत्यस्य प्रारब्धावसाने आत्यन्तिकनिवृत्तिद्वारा भाविदुःखहानस्य मोक्षस्योपाय इत्यर्थः ॥ २६ ॥

২৬। সত্ত্ব ও পুরুষের ভেদজ্ঞানকে বিবেকখ্যাতি বলে, এই বিবেকখ্যাতি মিথ্যাজ্ঞান বা তৎকৃত ব্যুত্থানবিরহিতভাবে নিরন্তর উৎপদ্যমান হইলে মোক্ষের হেতু হয়।

स्थिरविवेकख्यातेर्जीवन्मुक्तस्य ज्ञानवैभवमाह—

**तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥ २७ ॥**

प्रकृष्टोऽन्तोऽवसानं फलत्वेन यासां ताः प्रान्ताश्चरमा इति यावत्। प्रान्ता भूमयोऽवस्था यस्याः सा प्रज्ञा प्रान्तभूमिः। स्थिराविप्लवात्मख्यातेर्विदुषः प्रत्य-

[illegible] सप्तप्रकारा: प्रज्ञाऽवस्थाश्चरम भवन्ति। ज्ञातव्यमखिलं ज्ञातमत: परं न किञ्चिद् ज्ञातव्यमस्तीत्येका। सर्वजिज्ञासानिवर्त्तकत्वादियं प्रान्ता न ह्ययमनात्मज्ञस्य सम्भवति ततस्तदालम्बनसमाधिना प्रधानात्मप्रज्ञायां स्थिरायामपि आत्मजिज्ञासाया: सत्त्वेन तत्प्रज्ञाया अचरमत्वात्। एवमग्रिमावस्थानां प्रान्तत्वं मन्तव्यम्। हातव्या: सर्वे बन्धहेतवो हता: न किञ्चिन्मम हेयमस्तीति द्वितीया। कैवल्यप्राप्त्या प्राप्तव्यमखिलं प्राप्तमतोऽन्यत्र किञ्चिदपि मम प्राप्तव्यमस्तीति तृतीया। विवेकख्यातिसंपादनेन कर्त्तव्यमखिलं कृतं न किंचित्कार्य्यमस्तीति चतुर्थी। एतास्चतस्र: कार्य्यविमुक्तिसंज्ञा:। चित्तविमुक्तिसंज्ञा: तिस्र:। यथा कृतार्थं मे बुद्धिसत्त्वमित्येका। बुद्ध्यादिरूपा गुणा अपि गिरिशिखरच्युता इव ग्रावाणो निरवस्थाना: स्वकारणे प्रलयाभिमुखा: संपातेनास्तमात्यन्तिकं गच्छन्ति तेषां नास्ति पुन: प्ररोह: प्रयोजनाभावादिति द्वितीया। तथा गुणातीत: स्वरूपमात्रावस्थितश्चिदेकरस इति तृतीया; प्रज्ञाऽवस्थेत्यर्थ:। जिज्ञासा-जिहासा-प्रेप्सा-चिकीर्षा-शोकभयविकल्पान्तका: सप्त प्रज्ञाभूमय: प्रान्ता मन्तव्या इत्यर्थ:॥ २७॥

২৭। বিবেকজ্ঞান উৎপন্ন হইলে যোগীর সপ্তপ্রকার প্রজ্ঞা উৎপন্ন হয় ; সেই প্রজ্ঞা প্রান্তভূমি অর্থাৎ তাহার পরিণাম অতিশুভ।

संप्रति प्रज्ञासाधनान्याह—

**योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्ति-राविवेकख्यातिः ॥२८॥**

**योगाङ्गानां योगस्य चानुष्ठानादशुद्धेः क्लेशकर्मरूपायाः क्रमेण क्षये जायमाने ज्ञानस्य दीप्तिर्विशुद्धिः आनिर्विकल्पविवेकख्यातिर्भवतीत्यर्थः । साङ्गयोगानुष्ठानशुद्धिद्वारा प्रज्ञासाधनमिति भावः ॥ २८ ॥**

২৮। যম নিয়ম প্রভৃতি আটপ্রকার যোগাঙ্গের অনুষ্ঠান করিতে করিতে অবিদ্যাদি ক্লেশপঞ্চকের তিরোধান হয়, তখন আত্মজ্ঞান পর্য্যন্ত হইয়া থাকে।

कानि योगाङ्गानीत्यत आह—

**यमनियमासनप्राणायामप्रत्याहारधारणा-ध्यानसमाधयोऽष्टावङ्गानि ॥ २९ ॥**

**अन्यानपेक्षत्वेन सफलत्वाद्यमा आदावुच्यन्ते । पश्चाद्यमसापेक्षा नियमाः । एतदुभयाधीनस्वरूपेक्षा आसनादय उत्तरोत्तरहेतवः पश्चादुच्यन्ते ॥२९॥**

২৯। যম নিয়ম প্রভৃতি আটটী যোগের অর্থাৎ অসম্প্রজ্ঞাত-রূপ নিরোধ সমাধির কারণ।

एतेषां योगिभिरुपादेयविशेषमाह—

**अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः॥३०॥**

तत्राहिंसा नाम मनोवाक्कायैः सर्वदा सर्वभूतानामपीडनं परः शुक्ल एष धर्म्मः। अन्ये यमादयः एतस्या एव मूलार्थाः। तथा चोक्तम्—"स खल्वयं ब्राह्मणो यथा यथा व्रतानि बहूनि समादित्सति तथा तथा प्रमादकृतेभ्यो हिंसानिदानेभ्यो निवर्त्तमानस्तामेवावदातरूपामहिंसां करोतीति। सत्यं परहितार्थं यथाऽर्थकथनम्। बलाद्रहसि वा परवित्तहरणं स्तेयं तदभावोऽस्तेयं परद्रव्यास्पृहेत्यर्थः। ब्रह्मचर्य्यम् उपस्थसंयमः। स्त्रियाः प्रेक्षणालापस्पर्शश्रवणध्यानत्यागः तदङ्गम्। अपरिग्रहो नाम देहयात्राऽतिरिक्तभोगसाधनास्वीकारः। एते पञ्च यमाः योगस्य विरोधिहिंसाऽनृतस्तेयस्त्रीसङ्गपरिग्रहनिरासकत्वेनाङ्गत्वं भजन्ते ॥३०॥

৩১। আট প্রকার যোগের অঙ্গমধ্যে অহিংসা, সত্য, অস্তেয় অর্থাৎ চুরি না করা, ব্রহ্মচর্য্য ও অপরিগ্রহ এই পাঁচটীকে যম বলে।

**जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥ ३१ ॥**

जातिर्गोत्वब्राह्मणत्वादिः। देशस्तीर्थादिः। कालो

नियतश्चतुर्दश्यादिः । अनियतो ब्राह्मणभोजनाद्यवसरः समयः । तत्र सदा गोब्राह्मणं न हनिष्यामीत्यहिंसा जात्या परिच्छिन्ना । कमपि तीर्थे वा चतुर्दश्यां वा न हनिष्यामीति देशकालाभ्यामवच्छिन्ना । देवब्राह्मणाद्यर्थभोजनादिसमयातिरेकेण न हनिष्यामिति समयावच्छिन्ना । प्राणिमात्रं क्वचिदपि कस्यापि कृतेऽहं न हनिष्यामीति जात्यादिभिश्चतुर्भिरनवच्छिन्ना । भवत्यहिंसा पुष्कला । एवं सत्यादयोऽपि अनवच्छिन्ना ऊहनीयाः । एवं सर्वासु जात्यादिषु भूमिषु क्रमाव्यवस्थासु विदिताः सार्वभौमा महाव्रतमित्युच्यन्त इत्यर्थः ॥३१॥

৩১। কথিত অহিংসা প্রভৃতি যদি জাতি, দেশ, কাল ও শপথের দ্বারা সীমাবদ্ধ না হয় এবং সমস্ত বিষয়ে সর্ব্বপ্রকারে অনুগত হয়, তবে মহাব্রত বলা যায়।

नियमानाह—

**शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥३२॥**

शौचं मृज्जलादिकृतं गोमूत्रपावकादिमेध्याहारकृतं च बाह्यम् । आन्तरं मैत्र्यादिभावनया चित्तस्याऽसूयाऽऽदि मलप्रक्षालनम् । सन्तोषः सन्निहितप्राणधारण-

मात्रहेतुना तुष्टिः । तपो द्वन्द्वसहनं यथायोगं कृच्छ्रादिकं च । स्वाध्यायः प्रणवाद्यभ्यासः ।

ज्ञानतोऽज्ञानतो वाऽपि यत्करोमि शुभाशुभम् ।
तत्सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम् ॥
कर्मणा मनसा वाचा या चेष्टा मम नित्यशः ।
केशवाराधने सा स्याज्जन्मजन्मान्तरेष्वपि ॥

इति परमगुरौ सर्वपुण्यकर्मार्पणमीश्वरप्रणिधानमित्यर्थः ॥३२ ॥

৩২। শৌচ, সন্তোষ, তপঃ, স্বাধ্যায় ও ঈশ্বরপ্রণিধান, এই পঞ্চবিধকে নিয়ম বলে।

## वितर्कबाधने प्रतिपक्षभावनम् ॥३३॥

एतेषां यमनियमानां वितर्कैर्हिंसाऽऽदिसङ्कल्पैर्हनिष्याम्येनमपकारिणमनृतं वक्ष्यामि, परस्वमादास्ये, इत्यादिभिर्बाधने प्राप्ते सति यमादिपरो ब्राह्मणः प्रतिपक्षभावनं कुर्यात् घोरेषु संसाराङ्गारेषु पच्यमानेन मया शरणमुपगताः सर्वभूताभयप्रदानेन यमादिधर्माः स खल्वहं त्यक्त्वाऽहिंसाऽऽदीन् पुनस्तानाददानस्तुल्यः श्ववृत्तेनेति । यथा श्वा वान्ताशी तथा त्यक्तस्य पुनरादातेति वितर्कप्रतिपक्षान् भावयेदित्यर्थः ॥३३॥

৩৩। পূর্ব্বোক্ত হিংসা দ্বেষ প্রভৃতি মনোবৃত্তির নাম বিতর্ক,

তদ্দ্বারা যম নিয়মাদির উচ্ছেদের উপক্রম হইলে তাহাদের (বিতর্কাদির) দোষ চিন্তা করিবে।

संप्रति वितर्काणां स्वरूपप्रकारकारणावान्तर-भेदफलानि पञ्चभिः पदैः क्रमेण वदन् प्रतिपक्षभावनं स्फुटयति—

वितर्का हिंसाऽऽदयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ॥३४॥

वितर्क्यन्त इति वितर्का हिंसाऽऽदय इति स्वरूपोक्तिः। तत्र हिंसा त्रिप्रकारा। स्वयंकृता, कुर्विति कारिता, साधु साध्वित्यनुमोदिता चेति। तत्रैकैका पुनस्त्रिविधा भवति कारणभेदात्। मांसचर्मादिलोभेन, अपकृतमनेनेति क्रोधेन, धर्मो मे भविष्यतीति मोहेन। एवं नवविधा जाता हिंसा। पुनः लोभक्रोधमोहाः प्रत्येकं त्रिविधा भवन्ति मृदुमध्याधिमात्रत्वेन तत्पूर्वका हिंसादयोऽपि मृदवो मध्या अधिमात्राश्च भवन्ति, तथा कृता कारिता अनुमोदिता च प्रत्येकं नवधा भवतीति हिंसायाः

सप्तविंशतिभेदा भवन्ति। मृदुमध्याधिमात्रा अपि प्रत्येकं त्रिधा भवन्ति। मृदुमृदुः, मध्यमृदुः, तीव्रमृदुः, मृदुमध्यो मध्यमध्यः, तीव्रमध्यः, मृदुतीव्रः, मध्यतीव्रः, तीव्रतीव्रः, इति। एवं लोभो नवविधः। एवं क्रोधमोहाविति। तत्पूर्वा कृता हिंसा सप्तविंशतिभेदा भवति। तथा कारितानुमोदिता चेत्येकाशीतिभेदा हिंसा भवति। एवमनृतादिष्वपि योज्यम्। एवंभूता वितर्काः। दुःखं नरकादिकम्, अज्ञानं स्थावरादिभावं भ्रान्तिसंशयरूपं, चानन्तं फलयतीति प्रतिपक्षाणां वितर्कशत्रूणां भावनमित्यर्थः। तेन दोषचिन्तनेन वितर्का हेया इत्युपदिष्टं भवति। तद्धाने सति निर्विघ्ना यमनियमा दश सिध्यन्ति। तत्सिद्धौ चित्तशुद्धिद्वारा कैवल्यम्। अतो योगः सिध्यतीति तात्पर्य्यम् ॥ ३४ ॥

৩৪। হিংসা, মিথ্যাকথা, চৌর্য্য, পরদারগমন প্রভৃতিকে বিতর্ক বলে, এই গুলি স্বয়ং কৃত, অথবা পরের দ্বারা করান, কিংবা অপরে করিয়াছে তাহাতে অনুমোদন করা, এই হিংসাদি লোভ, ক্রোধ ও মোহপূর্ব্বক হইয়া থাকে, এইগুলি মন্দ মধ্য ও তীব্ররূপে সম্পন্ন হয়, ইহাদের ফল অনন্ত দুঃখ ও অজ্ঞান, অতএব ইহাদের অনুষ্ঠান করা উচিত নহে, এইরূপে প্রতিপক্ষভাবন অর্থাৎ প্রতিকূল চিন্তা করিবে।

संप्रति दशानां सिद्धिसूचकमवान्तरफलं क्रमेण दर्शयति—

**अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः ॥३५॥**

अहिंसासिद्धौ सत्यां तस्याहिंसकस्य मुनिवर्यस्य सन्निधौ स्वभावविरुद्धानामहिनकुलादीनामपि वैर-त्यागो भवतीत्यर्थः ॥ ३५ ॥

৩৫। অহিংসাবৃত্তি সম্যক্‌রূপে স্থির হইলে তাদৃশ যোগীর নিকটে অপর সমুদয় হিংস্রজন্তুর হিংসাবৃত্তি থাকে না।

**सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ॥ ३६ ॥**

सत्यप्रतिष्ठायां सत्यां क्रिया धर्माधर्मरूपा, तत्फलं स्वर्गादिकं, तयोराश्रयो वाङ्मात्रेण दाता तस्य भावः तत्त्वं भवति। यथा धार्मिको भूया इत्युक्ते भवति धार्मिकः स्वर्गमाप्नुहीत्युक्तमात्रादधार्मिकोऽपि तथैव भवतीत्यर्थः ॥ ३६ ॥

৩৬। সত্যব্রত সম্যক্ স্থির হইলে তাদৃশ যোগিগণের ধর্ম্মাধর্ম্ম ও স্বর্গাদি প্রদানের সামর্থ্য হয়।

**अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥ ३७ ॥**

अचौर्यदार्ढ्यें सति सर्वेषां दिव्यरत्नानामस्य संकल्पमा-त्रेण प्राप्तिर्भवतीत्यर्थः ॥ ३७ ॥

৩৭। অস্তেয় ব্রতসিদ্ধি হইলে অর্থাৎ স্বপ্নেও পরদ্রব্যে অভিলাষ না হইলে যোগীর সঙ্কল্পমাত্রেই সমস্ত রত্নের উপস্থিতি হয়।

**ব্রহ্মচর্য্যপ্রতিষ্ঠায়াং বীর্য্যলাভঃ ॥ ৩৮ ॥**

বীর্য্যনিরোধো হি ব্রহ্মচর্য্যং তৎসিদ্ধৌ নিরতিশয়ং সামর্থ্যং ভবতি। যেনাণিমাদ্যুপস্থিতির্ভবতি। শিষ্যেষূপদেশঃ সদ্যঃ ফলতীতি ভাবঃ ॥ ৩৮ ॥

৩৮। সমস্ত ইন্দ্রিয় জয়পূর্ব্বক উপস্থ সংযম করিলে বীর্য্যলাভ হয়। অনিমাদি ঐশ্বর্য্যলাভের সামর্থ্য হয়।

**অপরিগ্রহস্থৈর্য্যে জন্মকথন্তাসম্বোধঃ ॥৩৯॥**

অপরিগ্রহশীলস্য তৎস্থৈর্য্যে সতি অতীতবর্ত্তমানভাবিজন্মনাং যা কথন্তা কিংপ্রকারতা তস্যাঃ সম্যগ্‌বোধো জিজ্ঞাসাপূর্ব্বকো ভবতীর্থঃ। কিং রূপং, জন্ম কিং প্রকারকং, কিং হেতুকং, কিং ফলকং, কিমবসানমিতি শরীরপরিগ্রহবিরোধিনাং জিজ্ঞাসা ভবতি। ততঃ কার্য্যকারণসম্বন্ধঃ পুরুষস্যাজস্য জন্ম, নরদেবতির্য্যক্ ত্বপ্রকারং, ক্লেশকর্ম্মহেতুকং, দুঃখৈকফলকং, পুরুষত্বসংবোধাবসানমিত্যাচার্য্যাগমতো নিশ্চিত্যাশরীরঃ সন্নপরিগ্রহকাষ্ঠামনুভবতীতি ভাবঃ ॥ ৩৯ ॥

৩৯। পূর্ব্বোক্ত অপরিগ্রহ অর্থাৎ বিষয়দোষ দর্শন করিয়া বৈরাগ্যসিদ্ধি হইলে অতীত বর্ত্তমান ও ভবিষ্যৎ জন্মের বিবরণ জানা যায়।

उक्ता यमसिद्धयः ; अधुना नियमसिद्धय उच्यन्ते—

**शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः ॥४०॥**

यो वाह्यशौचसिद्धः तस्य स्वाङ्गे काये शुद्धिमपश्यतो जुगुप्सा भवति । अशुचिस्वभावोऽयं कायः नात्राग्रहकारः कार्य इति । शौचपरस्य मम कायो न शुध्यति किमु प्रमत्तपरकाय इति दोषदर्शिनः परकायैरसंसर्गो भवतीत्यर्थः ॥४०॥

৪০। বাহ্যশৌচ সিদ্ধি হইলে নিজের দেহে ই ঘৃণা জন্মে, তখন পরকীয় শরীরের সংস্পর্শ হইতে পারে না।

एवं वाह्यशौचसिद्धिमुक्त्वाऽन्तःशौचसिद्धिमाह—

**सत्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शन-योग्यत्वानि च ॥४१॥**

शौचादित्यनुवर्तते । भवन्तीति वाक्यशेषः । बुद्धि-सत्त्वस्य रजस्तमोमलेर्ष्यादिमलध्वंसः शुद्धिः । ततः सत्त्वोत्कर्षः । ततः स्थैर्यम् । ततो वाह्येन्द्रियजयः । ततः पुरुषख्यात्यर्हत्वमिति विभागः ॥ ४१ ॥

৪১। কথিতরূপে শৌচসিদ্ধি হইলে চিত্তশুদ্ধি ও মনের প্রসন্নত্ব, স্থিরচিত্ততা, ইন্দ্রিয়ের জয়, আত্মসাক্ষাৎকার এই পাঁচ বিষয়ের উৎপত্তি হয়।

সন্তোষাদনুত্তমঃ সুখলাভঃ ॥৪২॥

তৃষ্ণাক্ষয়সিদ্ধা, অবশ্যং নিষ্কামস্য নিরতিশয়-সুখানুভবো ভবতি শুদ্ধসত্ত্বোৎকর্ষাৎ। তথা চ মহা-ভারতে যযাতিগীতা—

"যচ্চ কামসুখং লোকে যচ্চ দিব্যং মহৎসুখম্।
তৃষ্ণাক্ষয়সুখস্যৈতে নার্হতঃ ষোড়শীং কলাম্"॥ ইতি। ৪২॥

৪২। নিষ্কাম ব্যক্তির সন্তোষ সিদ্ধি হইলে অর্থাৎ আপনা-আপনি সন্তুষ্ট থাকিলে অপার আনন্দ লাভ হয়।

কায়েন্দ্রিয়সিদ্ধিরশুদ্ধিক্ষয়াত্তপসঃ ॥৪৩॥

স্বধর্মকৃচ্ছ্রচান্দ্রায়ণাদিনা ক্লেশপাপক্ষয়াৎ কায়-স্যাণিমাদিসিদ্ধিরিন্দ্রিয়াণাং দূরসূক্ষ্মার্থগ্রাহ্যত্বসিদ্ধি-র্ভবতি ॥৪৩॥

৪৩। তপস্যা করিলে অধর্ম্ম প্রভৃতি অশুদ্ধাদির বিনাশ হয়, তখন অণিমা, লঘিমা প্রভৃতি শরীরের সিদ্ধি এবং দূরদর্শনও দূর-শ্রবণাদি ইন্দ্রিয় সিদ্ধ হইয়া থাকে।

স্বাধ্যায়াদিষ্টদেবতাসম্প্রয়োগঃ ॥৪৪॥

ইষ্টমন্ত্রাদিজপাৎ স্বেষ্টদেবতায়াঃ সম্ভাষণাদি সিধ্যতি ॥৪৪॥

৪৪। স্বাধ্যায়সিদ্ধ যোগীর ইষ্ট মন্ত্রাদি জপসিদ্ধ হইলে ইষ্ট দেবতার দর্শন হয়, তখন যাহাকে দেখিতে ইচ্ছা হয়, দর্শন পাওয়া যায়।

समाधिसिद्धिरीश्वरप्रणिधानात् ॥४५॥

ईश्वरार्पितसर्वभावस्य भक्त्यैव योगसिद्धिर्भवति । नचैवं सति यमादिसप्ताङ्गवैयर्थ्यं स्यादिति वाच्यम् । अङ्गैर्भक्त्या वा योगसिद्धिरिति विकल्पाभ्युपगमात् । तदुक्तम्—"ईश्वरप्रणिधानाद्वा" इति । न वा भक्तिपक्षेऽङ्गवैफल्यं यमादीनां भक्तावप्यङ्गत्वसम्भवात् । तेषां भक्तियोगोभयार्थत्वं दश इन्द्रियक्रतूभयार्थत्ववदविरुद्धम् । न चाङ्गानामावश्यकत्वे तैरेव सिद्धेः किं भक्त्येति वाच्यम् । भक्तिहीनोपायैर्दूरे योगसिद्धिः भक्त्यमृतवर्षिभिरासन्नतमा योगसिद्धिरिति चिराचिरयोगरूपफलप्राप्तिसाधनत्वेन विकल्पोपपत्तेः । सा चेश्वरे भक्तिः प्रत्यगात्मयोगविषयभिन्नविषयेति बहिरङ्गत्ववाचोयुक्तिरित्यनवद्यम् ॥ ४५ ॥

৪৫। পরমেশ্বরে সমস্ত ক্রিয়া ও তৎ ফল সমর্পণরূপ প্রণিধানের সিদ্ধি হইলে অসম্প্রজ্ঞাত সমাধির লাভ হয়।

एवं यमनियमान् सह सिद्धिभिर्निरूप्यासनस्वरूपमाह—

स्थिरसुखमासनम् ॥४६॥

निश्चलं सुखावहं च यदासनं तद्योगाङ्गमित्यर्थः । आस्यतेऽनेनेत्यासनम् । तद् द्विविधं बाह्यं शारीरं

च । तत्र चैलाजिनकुशोत्तरं बाह्यं, शारीरं पद्मस्वस्तिकादीति विशेषः । तत्र पद्मासनं प्रसिद्धम् । सव्यमाकुञ्चितचरणं दक्षिणजङ्घोर्वन्तरे, दक्षिणं च सव्यजङ्घोर्वन्तरे निक्षिपेदिति स्वस्तिकासनम् । द्वे पादतले वृषणसमीपे सम्पुटीकृत्य संपुटोपरि पाणिसंपुटिकां न्यसेदिति भद्रासनं द्रष्टव्यम् ॥४६॥

৪৬। বহুক্ষণ একভাবে স্থির থাকিলে যাহাতে কষ্টবোধ হয় না, সেইরূপ ক্রিয়াকে আসন বলে, তাদৃশ আসনই যোগের আসন।

संप्रत्यासनस्थैर्योपायमाह—

प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ॥४७॥

स्वाभाविकः प्रयत्न स्वलत्वादासनविघातकः तस्योपरमेणासनं सिध्यति । येन नाङ्गमेजयो भवति । अनन्ते नागनायके स्थिरतरफणासहस्रविधृतविश्वमण्डले चित्तस्य समापत्त्या देहाभिमानाभावेनासनदुःखास्फूर्तेरासनं सिध्यति ॥४७॥

৪৭। শরীরের চেষ্টা রহিত ও অনন্তদেবে সমাধি করিলে আসন সিদ্ধি হয়।

तत्सिद्धिलिङ्गमाह—

ततो द्वन्द्वानभिघातः ॥४८॥

आसनजयात् शीतोष्णादिभिरताडनं भवति ॥४८॥

৪৮। আসনসিদ্ধি হইলে শীত উষ্ণ প্রভৃতি বিরুদ্ধ ধর্ম্মরূপ দ্বন্দ্বদ্বারা অভিভূত হয় না।

संप्रत्यासनसाध्यं प्राणायाममाह—

तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥४९॥

आसनस्थैर्य्ये सति वाह्यकौष्ठ्यवाय्वोरन्तर्बहिर्गति-विच्छेदः प्राणायाम इत्यर्थः ॥४९॥

৪৯। কথিত আসনসিদ্ধ হইলে শ্বাস প্রশ্বাস (বহিঃস্থিত বায়ুকে অন্তঃপ্রবেশ করার নাম শ্বাস ও অন্তরের বায়ুকে বহির্নিঃসারণ করার নাম প্রশ্বাস) হয় না ইহাতে রেচক পূরক ও কুম্ভক নামক তিন প্রকার প্রাণায়াম হইয়া থাকে।

सामान्यलक्षणमुक्त्वा लक्ष्यं प्राणायामं विभजते—

वाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टोदीर्घः सूक्ष्मः ॥ ५० ॥

प्राणायामश्चतुर्विधः। वाह्यवृत्तिरभ्यन्तरवृत्ति स्तम्भवृत्ति स्तुरीयश्चेति। तत्र कौष्ठ्यस्य वायो रेचनेन वहिर्गतस्य वहिरेव धारणं वाह्यवृत्तिः स च रेचकः। वाह्यवायोः पूरणेनान्तर्गतस्यान्तर्द्धारणमभ्यन्तरवृत्तिः स च पूरकः। रेचनपूरणप्रयत्नं विना प्राणस्य केवल-विधारकप्रयत्नेन गतिविच्छेदः स्तम्भवृत्तिः स च कुम्भकः।

नायं रेचकः अन्तस्थत्वात्। नापिपूरकः तप्तशिलातल-निहितजलविन्दुवच्छरीरे प्राणस्य संकुचितत्वेन सूक्ष्मत्वात्। यो हि स्थूलोऽन्तर्निरुद्धो देहं पूरयति स पूरकः। तस्माद्रेचकपूरकाभ्यासेन विना सकृत्प्रयत्नमात्रेण सूक्ष्मप्राणस्य कुम्भकशब्दितस्य घटजलवन्निश्चलत्वेन देहेऽवस्थानात् कुम्भकस्तृतीयः सिद्धः। त्रिविधोऽयं प्राणायामो देशकालसंख्याभिर्दीर्घः सूक्ष्म इति परिदृष्टः। तत्र रेचकस्य वाह्यो देशो विषयः प्रादेशवितस्तिहस्तादिपरिमितो निर्वाते नासाग्रे इषीकातूलादिक्रियाऽनुमितः। पूरकादेस्त्वान्तरो देश आपादतलमस्तकं पिपीलिकास्पर्शतुल्येन स्पर्शेनानुमितः। क्षणगणनया ज्ञेयः कालः। मात्रागणनया ज्ञेया संख्या। स्वजानुमण्डलं पाणिना त्रिःपरामृश्य छोटिकाऽवच्छिन्नः कालोमात्रा। सा हि स्वस्थस्य पुंसः श्वासप्रश्वासाभ्यां मिता भवति। तत्र षड्विंतिमात्राभिरभ्यासक्रमेण दीर्घ इति दृश्यते। अधिकदेशकालव्यापित्वं प्राणनिरोधस्य दीर्घत्वम्। यथा यथा दीर्घ इति निपुणेन दृश्यते तथा तथा प्राणस्य सूक्ष्मत्वेन दर्शनाद्दीर्घ एव सूक्ष्म इति परिदृष्टो भवतीत्यर्थः॥ ५०॥

৫০। বাহ্য আভ্যন্তর ও স্তম্ভ বৃত্তিবিশেষে অর্থাৎ রেচক

পূরক ও কুম্ভকরূপে ত্রিবিধ প্রাণায়াম, দেশ কাল ও সংখ্যাভেদে দীর্ঘ সূক্ষ্মরূপে অভিহিত হইয়া থাকে।

तुरीयं प्राणायामं दर्शयति—

वाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥ ५१ ॥

प्राणस्य वाह्यो देशो विषयः, अभ्यन्तरविषयश्च हृदयनाभिचक्रादिः, तयोराक्षेपः सूक्ष्मदृष्ट्या पर्यालोचनं स यस्य पूर्वकालेऽस्ति स चतुर्थः स्तम्भवृत्तिः। तस्यापि दीर्घसूक्ष्मत्वं पूर्ववत्। न चास्य कुम्भकान्तर्भावः शङ्कनीयः। रेचकपूरकयोरभ्यासेन जितवाह्याभ्यन्तरविषयनिश्चयं विनैव सकृत्प्रयत्नमात्रेण स्तम्भवृत्तिः इति कुम्भकः। तद्विषयपूर्वक स्तम्भवृत्ति र्बहुप्रयत्नसाध्यस्तुरीय इति वैलक्षण्यादिति ॥ ५१ ॥

৫১। পূর্ব্বোক্ত বাহ্য ও আভ্যন্তর বিষয় কাল ও সংখ্যার পর্য্যালোচনা করিয়া চিরকাল অভ্যাস করিলে তাহাকে চতুর্থ প্রাণায়াম কহে, ইঁহাকে কেবল কুম্ভক ও বলে।

संप्रति चतुर्विधस्य प्राणायामस्य योगाङ्गत्वे द्वारभूतं फलमाह—

ततः क्षीयते प्रकाशावरणम् ॥ ५२ ॥

प्राणायामाभ्यासात्प्रकाशशीलस्य बुद्धिसत्त्वस्य पिधानं

क्लेशपापरूपं क्षीयते। तदुक्तं मनुना सर्वज्ञेन—
"प्राणायामैर्दहेद्दोषान्" इति ॥ ५२ ॥

৫২। প্রাণায়ামের অভ্যাস হইলে অভ্যাসের আবরণ অর্থাৎ বিবেকজ্ঞানের প্রতিবন্ধক কর্ম্ম, অধর্ম্ম ও ক্লেশ সমুদয়ের ক্ষয় হয়।

धारणासु च योग्यता मनसः ॥ ५३ ॥

किं च। प्राणायामादावरणक्षये सति मनसः सूक्ष्म-लक्ष्यधारणासु योग्यता भवतीत्यर्थः।

৫ । কথিত প্রাণায়ামের অভ্যাস হইলে একাগ্রতা রূপ ধারণা বিষয়ে চিত্তের শক্তি জন্মে।

उक्तयमादिभिः संस्कृतचित्तस्य प्रत्याहारो भवतीति मत्वा तं लक्षयति—

स्वविषयासंप्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥ ५४॥

शुद्धचित्तस्य शब्दादिभिः स्वविषयैरसंप्रयोगे सति वैराग्याद्विषयेभ्यो वियुज्य तत्त्वाभिमुखे सतीति यावद् इन्द्रियाणां चक्षुरादीनां य श्चित्तस्य स्वरूपानुकारः। स्वविषयासम्प्रयोगेन तत्त्वाभिमुखरूपः स प्रत्याहारः। इन्द्रियाणि विषयेभ्यः प्रातिलोम्येनाह्रियन्तेऽस्मिन्निति व्युत्पत्तेः। इन्द्रियाणां विषयप्रवणानां चित्त-

वस्तत्त्वाभिमुख्यं नास्तीति द्योतनार्थं इव शब्दः। यथा मक्षिका मधुकरराजं चलन्तमनुचलन्ति स्थित-मनुस्थिता भवन्ति तथा चित्तानुसारीणीन्द्रियाणि चित्तनिरोधेनैव निरुध्यन्ते न यत्नान्तरेणेति तात्पर्यम् ॥५४॥

৫৪। চিত্তশব্দাদি বিষয় হইতে প্রতিনিবৃত্ত হইলে ইন্দ্রিয়গণও নিবৃত্ত হইয়া চিত্তের অনুকরণ করে, ইহাকে প্রত্যাহার বলে। ইন্দ্রিয়গণ ঠিক চিত্তের ন্যায় একটী তত্ত্বে অভিনিবিষ্ট হইতে পারে না। ইব শব্দ দ্বারা চিত্ত ও ইন্দ্রিয়গণের কথঞ্চিৎ ভেদও দেখান হইয়াছে।

प्रत्याहारस्य योगद्वारभूतं फलमाह—

ततः परमा वश्यतेन्द्रियाणाम् ॥५५॥

अनिषिद्धविषयसेवाविषये तन्मत्वं विना स्वेच्छया भोगः, रागद्वेषाभावे सुखदुःखानुत्पादकं शब्दादि-दर्शनमिन्द्रियाणां वश्यता। सा न परमा विषया-शीविषयोगात्। या तु विषयैः स्वाभिमुखं नीय-मानानामपीन्द्रियाबलानां तत्त्वपतिव्रतात्वेन विषये-ष्वत्यन्तमप्रतिपत्तिः, रावणेन स्वाभिमुख्यं नीयमानाया अपि श्रीसीतायाः श्रीरामव्रतत्वेन राक्षसाधमाप्रति-

পক্তিবল্মা পরমেতি জৈগীষব্যঃ। প্রত্যাহারাদিন্দ্রিয়াণাং পরমা বশ্যতা ভবতীত্যর্থঃ ॥৫৫॥

ইতি সাধনপাদঃ সমাপ্তঃ ॥২॥

কথিত প্রত্যাহার সিদ্ধি হইলে ইন্দ্রিয়গণ সর্ব্বতোভাবে বশীকৃত অর্থাৎ বিজিত হইয়া থাকে।

# विभूतिपादः ।

एवं द्वितीयपादे क्लेशतनूकरणद्वारा योगसाधनं क्रियायोगं निरूप्य, सप्रपञ्चं क्लेशकर्मविपाकानुक्त्वा, तेषां हेयत्वार्थं दुःखत्वं दर्शयित्वा, हेयतद्धेतुमोक्षतद्धेतूनुपन्यस्य, योगस्य बहिरङ्गयमादिपञ्चकं सावान्तरफलं निरूपितम्। संप्रति धारणाऽऽदित्रितयमन्तरङ्गं संयमसंज्ञं वदन् संयमसाध्या विभूतयः श्रद्धाद्वारा कैवल्यफलकयोगप्रवृत्तिहेतवो वक्तव्या इति पादान्तरमारभमाणो धारणां लक्षयति—

**देशबन्धश्चित्तस्य धारणा ॥१॥**

नाभिचक्रहृदयनासाऽग्रादौ देशे संप्रज्ञातयोगसिद्धये चित्तस्य यो बन्धः स्थिरीकरणं सा धारणेत्यर्थः। तदुक्तं विष्णुपुराणे—

"प्राणायामेन पवन प्रत्याहारेण चेन्द्रियम् ।
वशीकृत्य ततः कुर्याच्चित्तस्थानं शुभाश्रये ॥
मूर्तं भगवतो रूपं सर्वोपाश्रयनिस्पृहम् ।
एषा वै धारणा ज्ञेया यच्चित्तं तत्र धार्यते ॥
तच्च मूर्तं हरे रूपं यादृक् चिन्त्यं नराधिप ।
तच्छ्रूयतामनाधारे धारणा नोपपद्यते ॥

प्रसन्नवदनं चारुपद्मपत्रनिभेक्षणम् ।
सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलम् ॥
समकर्णान्तविन्यस्तचारुकुण्डलभूषणम् ।
कम्बुग्रीवं सुविस्तीर्णश्रीवत्साङ्कितवक्षसम् ॥
वलीत्रिभङ्गिनामग्ननाभिना चोदरेण वै ।
प्रलम्बाष्टभुजं विष्णुमथ वाऽपि चतुर्भुजम् ॥
समस्थितोरुजङ्घं च सुस्थिराङ्घ्रिकराम्बुजम् ।
चिन्तयेद्‌ब्रह्मभूतं तं पीतनिर्मलवाससम् ॥" इति ।

১। অপর বিষয় হইতে চিত্তকে প্রতিনিবৃত্ত করিয়া নাভিচক্র-প্রভৃতি অন্তর্বিষয়ে এবং দেবতামূর্ত্তি প্রভৃতি বাহ্য বিষয়ে স্থির করার নাম ধারণা।

धारणासाध्यं ध्यानं लक्षयति—

तत्र प्रत्ययैकतानता ध्यानम् ॥ २ ॥

यत्र धारणा विजातीयवृत्तिपरिहारेण यत्रापेक्षा भवति तत्रैव या प्रत्ययानां वृत्तीनामेकतानता यत्न-मनपेक्ष्यैकविषयता तद्ध्यानमित्यर्थः ।

तद्रूपप्रत्ययैकाग्रसन्ततिश्चान्यनिस्पृहा ।
तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप ॥

इति तत्रैवोक्तं खाण्डिक्यजनकं प्रति केशि-ध्वजेन ॥ २ ॥

২। চিত্ত বিষয়ান্তর হইতে প্রতিনিবৃত্ত করিয়া পূর্ব্বোক্ত যে বিষয়ে স্থির করা যায়, সেই বিষয়াকারে চিত্তের বার বার বৃত্তি হওয়াকে অর্থাৎ একতানতাকে ধ্যান বলে।

समाधिं लक्षयति ---

**तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥३॥**

अतिस्वच्छचित्तवृत्तिप्रवाहरूपं ध्यानमेवार्थमात्रस्वरूपेण निर्भासमानं समाधिः। मात्रचोऽर्थमाह— स्वरूपशून्यमिवेति। ध्यानस्वरूपज्ञानशून्यम्। इवशब्देन ध्यानस्य सत्तां द्योतयति। यथा स्वच्छस्फटिकमणिः कुसुमरूपेणैव निर्भासते न स्वरूपेण तद्वदित्यर्थः। विजातीयवृत्तिविच्छिन्ना धारणा। अविच्छिन्नं ध्यानम्। ध्येयध्यानध्यातृस्फूर्तिमध्ये ध्येयमात्रस्फूर्तिमान्समाधिः। स एव दीर्घकालव्यापी सन् संप्रज्ञाताख्यो योग इत्युच्यते। ध्येयस्फूर्तिशून्योऽसंप्रज्ञात इति भेदः ॥३॥

৩। ধ্যানই ধ্যেয় অর্থাৎ ধ্যানের বিষয়াকারে ভাসমান হইয়া বিষয় স্বরূপে যখন প্রত্যয়াত্মক অর্থাৎ বৃত্তিস্বরূপ জ্ঞানকে যেন পরিত্যাগ করিয়াই অবভাষিত হয়, তখন তাহাকে সমাধি বলা যায়।

धारणाध्यानसमाधित्रयस्य व्यवहारलाघवफलां संयमसंज्ञामाह—

## ত্রয়মেকত্র সংযমঃ ॥৪॥

**একবিষয়ং ত্রয়ং সংযমসংজ্ঞং ভবতীত্যর্থঃ ॥৪॥**

৪। একটী বিষয়ে ধারণা, ধ্যান ও সমাধিকে সংযম বলে।

**সংযমস্য ফলমাহ—**

## তজ্জয়াৎপ্রজ্ঞাऽऽলোকঃ ॥৫॥

**তস্য সংযমস্য জয়াৎ স্থৈর্যাৎপ্রজ্ঞায়াঃ সমাধিজায়া আলোকো নৈর্মল্যং ভবতি। ভ্রান্তিসংশয়াদিমলশূন্যা ধ্যেয়তত্ত্বস্ফূর্তির্ভবতীত্যর্থঃ ॥৫॥**

৫। অভ্যাসের দ্বারা সংযমের জয় অর্থাৎ শ্বাস প্রশ্বাসের মত স্বাধীন করিতে পারিলে জ্ঞানের পূর্ণ বিকাশ হয়।

**ক্ব পুনর্নিযুক্তস্য সংযমস্যেদং ফলমিতি প্রশ্নস্যোত্তরং পঠতি—**

## তস্য ভূমিষু বিনিয়োগঃ ॥৬॥

**স্থূলসূক্ষ্মাদিষূক্তাঃ সবিতর্কানির্বিতর্কাসবিচারা-নির্বিচারাऽऽদয়ো ভূময়ঃ। তাসু সংযমস্য বিনিয়োগঃ। সংযমেন পূর্বভূমিং জিত্বা তদুত্তরাং ভূমিং জিগীষেত্। ন হি স্থূলমসাক্ষাৎকৃত্য সূক্ষ্মং সাক্ষাৎকর্তুং শক্যমিতি ভাবঃ ॥ ৬ ॥**

৬। স্থূল ও সূক্ষ্মাদি কথিত সংপ্রজ্ঞাত সমাধির বিষয় সমূহে পূর্ব্বপূর্ব্ব অবস্থা সম্যক্‌রূপে আয়ত্ত করিয়া উত্তরোত্তর বিষয়ে সংযম করিবার চেষ্টা করিতে হইবে।

ननु योगाङ्गानां मध्येऽङ्गपञ्चकं पूर्वपादे निरूपितं त्रयमत्र निरूपितं तत्र को हेतुरित्यत्राह—

त्रयमन्तरङ्गं पूर्वेभ्यः ॥ ৭ ॥

पञ्च यमादीनि संप्रज्ञातसमाधेः प्रतिबन्धकस्य चित्तकायप्राणेन्द्रियमलस्य निवृत्तिद्वारा वहिरङ्गानि। धारणाऽऽदित्रयं त्वङ्गिनः समानविषयतया साक्षात्स्वरूपोपकारकत्वादन्तरङ्गम्। अतः पूर्वेभ्यः पञ्चभ्य इदमन्तरङ्गमिति कृत्वा तत्तद्भूमिविनियोगोपयोगार्थमत्र निरूपितमित्यर्थः ॥ ৭ ॥

৭। ধারণা, ধ্যান ও সমাধি এই তিনটী সম্প্রজ্ঞাত সমাধির অন্তরঙ্গ অর্থাৎ সাক্ষাৎ সাধন, অপর যমনিয়মাদি পাঁচটী বহিরঙ্গ সাধন।

तदपि वहिरङ्गं निर्वीजस्य ॥ ৮ ॥

असंप्रज्ञातस्य धारणाऽऽदित्रयमपि वहिरङ्गम्। अङ्गिनो निर्विषयत्वेन त्रयस्य सविषयत्वेन समानविषयत्वाभावात्। अतो व्युत्थानरूपस्य त्रयस्य संप्रज्ञातपरिपाकप्रज्ञाप्रसादरूपपरवैराग्यद्वारा निरोधे सति संप्रज्ञातस्यापि निरोधान्निर्वीजो भवति। पारम्पर्येणोपकारकत्वाद्वहिरङ्गमित्यर्थः ॥ ৮ ॥

৮। ধারণাদিত্রয় সম্প্রজ্ঞাত সমাধির অন্তরঙ্গসাধন হইলেও নির্ব্বিষয় অসম্প্রজ্ঞাত সমাধির তাহা বহিরঙ্গ সাধন।

संप्रति संयमाद्विभूतीर्वक्तुकामः संयमस्य लक्ष्यान् परिणामान् दर्शयति—

**व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ॥ ९ ॥**

व्युत्थानं संप्रज्ञातः, स निरुध्यते येन तत्परवैराग्यं निरोधः । तत्र यदा व्युत्थानसंस्कारस्याभिभवो निरोधसंस्कारस्य प्रादुर्भावश्च भवतस्तदा निरोधसंस्कारस्यासंप्रज्ञातस्य क्षणेनावसरेण युक्तं चित्तं भवति । तस्य निरोधक्षणस्य चित्तस्य धर्मिणस्त्रिगुणत्वेन चलस्य सदा परिणामशीलस्याभिभूतप्रादुर्भूतयोः संस्कारयोर्धर्मित्वेन योऽन्वयः स निरोधाख्यः परिणाम इत्यर्थः । परवैराग्यरूपवृत्त्या संप्रज्ञातवृत्तेस्तत्संस्कारस्य चाभिभवे सति परवैराग्यसंस्कार एवाभिव्यक्तः सन्निर्बीजनिरोधपरिणाम इति भावः ॥ ९ ॥

৯। সম্প্রজ্ঞাতসমাধির জন্য সংস্কারের অভিভব, অসংপ্রজ্ঞাত সমাধির জন্য সংস্কারের প্রাদুর্ভাব, এই উভয়বিধ অবস্থার সমাবেশ-কালে নিরোধকালীন চিত্তের অবস্থাকে নিরোধ পরিণাম বলে।

सर्वात्मना व्युत्थानसंस्काराभिभवे सति निरोधस्थैर्यमाह—

**तस्य प्रशान्तवाहिता संस्कारात् ॥ १० ॥**

निरोधसंस्कारप्रचयान्निरस्तसमस्तव्युत्थानसंस्कार-

मलस्य चित्तस्य निरोधसंस्कारपरम्परामात्रवाहिता भवति। ननु तर्हि चलमेव तदाऽपि चित्तं सत्यं तदाऽपि तादृशी परिणाममाला स्थैर्यमित्युच्यत इति भावः ॥ १० ॥

১০। নিরোধ সংস্কার দৃঢ়তর হইলে চিত্তের প্রশান্তরূপে অবস্থান অর্থাৎ বুত্থান সংস্কার দূরীভূত হইয়া স্বরূপে স্থিতি হয়।

एवं निर्बीजावस्थामुक्त्वा संप्रज्ञातपरिणाममाह—

सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ॥ ११ ॥

चित्तस्य सर्वार्थता नानाऽर्थाकारत्वं विक्षिप्तत्वरूपो-धर्मः। एकाग्रता वक्ष्यमाणो धर्मः। तयोर्यथाक्रमं क्षयोदयौ तिरोभावप्रादुर्भावौ, न सतो विनाशो नासत उत्पत्तिस्तौ समाधिपरिणाम इत्यर्थः। अभ्यासेन विक्षेपात्यये सत्येकाग्रता स्थैर्य्यं समाधिरिति भावः ॥११॥

১১। চিত্তে ক্রমশঃ বিক্ষিপ্তভাব অপসারিত হইয়া একাগ্রভাব অর্থাৎ একালম্বনতা উদয়ের নাম সমাধিপরিণাম। এই পরিণাম যুগপৎ হয় না, ক্রমশঃ একাগ্রভাব প্রবল এবং বিক্ষিপ্ত ভাব দুর্ব্বল হইতে থাকে।

शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यै-काग्रतापरिणामः ॥ १२ ॥

शान्तोऽतीतः, उदितो वर्तमानः, तौ। एकविषयत्वेन तुल्यौ च तौ प्रत्ययौ च तुल्यप्रत्ययौ। चित्तस्य मैरन्तर्येण वृत्तिद्वयमेकविषयमेकाग्रताऽऽख्यः परिणाम इत्यर्थः। इयमेकाग्रता द्वादशगुणा धारणा भवति। द्वादशगुणा धारणा, ध्यानम्। द्वादशगुणं ध्यानं, समाधिः। द्वादशगुणः समाधिः, संप्रज्ञाताख्योयोग इति भेदः॥ १२॥

১২। বিক্ষিপ্তভাব সম্পূর্ণরূপে দূর হইলে এক বিষয়ে পূর্ব্বজ্ঞান নিবৃত্ত হইয়া সমান বিষয়ে তুল্যরূপে উত্তর জ্ঞান উৎপন্ন হয়, এই উভয় অবস্থায় চিত্তের অনুগমনকে একাগ্রতা পরিণাম বলে।

मनःपरिणामेषु निरोधसमाध्येकाग्रतासूक्तन्यायमन्यत्रातिदिशति—

## एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः॥ १३॥

भूतेषु पृथिव्यादिषु धर्मिषु चक्षुरादीन्द्रियेषु च। परिणामस्त्रिविधः धर्मपरिणामो, लक्षणपरिणामोऽवस्थापरिणामश्चेति। एतेन मनः परिणामव्याख्यानेन व्याख्याता भवन्ति। तथा हि मृदः पिण्डरूपधर्माभिभवे सति घटरूपो धर्मः प्रादुर्भवति यथा, तथा चित्तस्य व्युत्थानात्यये निरोधोद्भवः सोऽयं धर्मपरि-

णामः। लक्षयति कार्यरूपं धर्मं व्यावर्तयतीति लक्षणं कालत्रयम् अनागतोऽध्वा, वर्त्तमानोऽध्वा,अतीतोऽध्वा, इति कालत्रयमेवाध्वत्रयमित्युच्यते। तत्र तद्धर्मस्य घटस्यानागतत्वं प्रथमोऽध्वा, वर्तमानत्वं द्वितीयोऽध्वा, अतीतत्वं तृतीयोऽध्वा. सोऽयं लक्षणपरिणामः। अनागतत्वं हि धर्मो वर्तमानातीतधर्माभ्यां व्यावर्तयति। एवं वर्तमानत्वादिकमपि लक्षणं मन्तव्यम। एवं लक्षणपरिणामस्य तदवच्छिन्नस्य धर्मस्य वाऽवस्थापरिणामो-द्रष्टव्यः। स यथा आगामिकल्पभावी अनागततमः, एतत्कल्पभाव्यनागततरः, श्वोभावी अनागतः,सद्यो जातो वर्तमानतमः, इत्याद्युह्यम्। तथा वर्तमानस्य नवत्व-पुराणत्वादयोऽवस्थापरिणामाः। एवं प्रतिक्षणपरि-णामिनः सर्वे भावाः, ऋते चितिशक्तेरिति संक्षेपः॥१३॥

১৩। কথিত চিত্তপরিণাম দর্শনের দ্বারা স্থূল পঞ্চভূত ও একাদশ ইন্দ্রিয়ের ধর্ম্মপরিণাম,লক্ষণ পরিণাম দেখান হইয়াছে।

यस्यायं त्रिविधः परिणामः तं धर्मिणं दर्शयति—

## शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ॥१४॥

शान्ताः कृतव्यापारा अतीताः। उदिता जला-हरणादिव्यापाराविष्टा वर्तमानाः। अव्यपदेश्याः शक्ति-रूपेण मृदादिषु धर्मिषु स्थिता अनागताः। ते हि

सूक्ष्मतया धर्मिणो धर्मान्तराद्वा भेदेन व्यपदेशेन व्यपदेष्टुं न शक्यन्त अत एव सर्वं कार्यं शक्तिरूपेणाव्यपदेश्यं कारणमात्रसम्भावितमिति सर्वं कारणं सर्वकार्यात्मकं भवति। दृश्यते हि दावदग्धवेत्रबीजात्कदलीखण्डोद्भवः। न हि तत्रासत उद्भवः सम्भवति अभिव्यञ्जकानां देशकालकर्मादीनां वैचित्र्यात्क्वचित्किञ्चिदेवोद्भवतीति लोके कार्यकारणव्यवस्था। योगसिद्धानां देशादिप्रतिबन्धाभावात्सर्वस्मात्सर्वमुद्भवति तानेतान् शान्तोदिताव्यपदेश्यान् घटीयन्त्रवदनिशमावर्तमानान्योऽनुपतत्यन्वेति सोऽनुपातो धर्मी। यथा मृत्सुवर्णादिश्चूर्णपिण्डघटरुचकाद्यन्वयी धर्मीत्युच्यते ॥१४॥

১৪। যাহা ধর্ম্মের বা শক্তিবিশেষের আশ্রয়, তাহার নাম ধর্ম্মী। প্রত্যেক ধর্ম্মী অর্থাৎ প্রত্যেক প্রাকৃতিক দ্রব্যই শান্ত, উদিত ও অব্যপদেশ্য এই ত্রিবিধ ধর্ম্মের দ্বারা অন্বিত।

ननु एकस्य धर्मिणः परिणामबहुत्वे को
हेतुरित्यत आह—

## क्रमान्यत्वं परिणामान्यत्वे हेतुः ॥१५॥

मृदि चूर्णपिण्डयोः पिण्डघटयोर्घटकपालयोः पौर्वापर्यरूपक्रमस्यान्यत्वं दृश्यमानमेकस्या एव मृदः परिणामानां चूर्णादीनां धर्माणामन्यत्वे हेतु-

ज्ञापकः । एवमनागतवर्तमानातीताध्वनां क्रमात्र-क्षणपरिणामान्यत्वे धर्माणां ज्ञेयम् । तथा क्षणपरम्परया घटव्रीह्यादीनां दुर्लक्ष्यसूक्ष्मपरिणामक्रमेण नवत्वपुराणत्वाद्यवस्थापरिणामान्यत्वे बोध्यम् । दृश्यते हि कुसूलरक्षितव्रीहीणां कालेन पांशुस्पर्शमात्रेण चूर्णावस्था । न ह्नीयं क्षणिकपरिणामक्रमं विना नवानां वा दृष्टा । नाप्यकस्माद्भवति । तस्माद्धर्मिणः परिणामिनित्यस्य धर्मा भिन्नाः, धर्माणां लक्षणानि, तेषामवस्था, इति स्थितम् । धर्म्यनन्यत्वान्न क्षणिकत्ववाद इत्यनवद्यम् । तत्र केचित्परिणामाश्चित्तस्य प्रत्यक्षाः कामसुखादयः । केचित्त्वागमानुमानगम्याः सप्त । तदुक्तं भाष्ये—

"निरोधकर्मसंस्काराः परिणामोऽथ जीवनम् ।
चेष्टा शक्तिश्च चित्तस्य धर्मा दर्शनवर्जिताः ॥" इति ।

परोक्षा इत्यर्थः । कर्म पुण्यापुण्यापूर्वम् । त्रिगुणत्वाच्चित्तस्य प्रतिक्षणपरिणामोऽनुमेयः । जीवनं श्वासादिलिङ्गगम्यं प्राणधारणम् । चेष्टा क्रिया चित्तस्या गात्रचेष्टागम्या । कार्याणां सूक्ष्मावस्था शक्तिः ॥१५॥

১৫ চূর্ণ-পিণ্ডঘটাদিবিকারসমূহের পৌর্ব্বাপর্য্যক্রমের নানাত্ব হেতু পরিণামে নানাত্ব ঘটিয়া থাকে ; এইজন্য এক ধর্ম্মীর এক বিধ পরিণাম না হইয়া নানারূপ হইয়া থাকে ।

एवं संयमधर्मस्य विषया धर्मादयो निरूपिताः। संप्रत्यापादसमाप्तेः संयमस्य तत्तद्विषये वशीकारख्यापनाय विभूतय उच्यन्ते—

परिणामत्रयसंयमादतीतानागतज्ञानम् ॥१६॥

चित्तसत्त्वं हि स्वतः सर्वप्रकाशस्वभावं रजस्तमोमलप्रतिबन्धस्य संयमेन निवृत्तौ सत्यां प्रमाणमनपेक्ष्य सर्वं जानातीति स्थितिः। तत्रास्मिन् धर्मिण्येते धर्मा अनागतादयः, एतेऽध्वानः, एता अवस्थाः, इति धर्मलक्षणावस्थारूपपरिणामत्रयसंयमाद्योगिनोऽतीतानागतवस्तुसाक्षात्कारो भवतीत्यर्थः ॥१६॥

১৬। ধর্ম্ম, লক্ষণ ও অবস্থারূপ কথিত ত্রিবিধ পরিণামের সংযম ( ধারণা, ধ্যান ও সমাধি ) করিলে ভূত-ভবিষ্যৎ সমস্ত জানা যায় ; সেই যোগীর অজ্ঞাত কিছুই থাকে না।

शब्दार्थप्रत्ययानामितरेतराध्यासात् संकरस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम् ॥१७॥

वर्णातिरिक्तो वर्णव्यङ्ग्यो नित्यो निर्भागः शब्दः स्फोटः। स द्विविधः। गौरित्येकं पदमिति श्रोत्रग्राह्यः पदस्फोटः, गामानयेत्येकं वाक्यमिति ग्राह्यो-

वाक्यस्फोटः। न च क्षणिकानेकवर्णेष्वेकत्वप्रत्यक्षबुद्धिः। तथा हि—'गौरिति त्रयो वर्णा गणगौदिप्रयःपदेषु विद्यमानैर्गकारौकारविसर्जनीयैर्विजातीयस्फोटत्रयव्यञ्जकैः सदृशा भवन्ति तुल्यस्थानत्वात्।

तदुक्तम्—

"अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च॥" इति।

एवं स्पर्शानां स्पृष्टप्रयत्नः, स्वराणामूष्मणां च निवृतमित्यादि प्रयत्नसादृश्यं द्रष्टव्यम्। तथा च प्रयत्नविशेषेणुन्नस्योदानवायोरष्टस्थानैः संयोगे सत्यष्टस्थानस्थेन वागिन्द्रियेणोत्पद्यमाना गकारादयो वर्णा ध्वन्यभेदेन श्रोत्रप्रत्यक्षानुभववेद्याः प्रत्येकं गोपदस्फोटं व्यञ्जयन्तो गणादिस्फोटैः सदृशमव्यक्तं व्यञ्जयन्ति स्वनिष्ठसादृश्यानां स्वव्यङ्ग्ये समारोपात्। पुनर्गकारादयस्त्रयः क्रमवन्तः स्वानुभवजनितसंस्कारसहितश्रोत्रलब्धजन्मन्येकस्यां बुद्धौ भासमानत्वेन मिलिताः स्वस्फोटान्तराद्व्यावृत्तं व्यक्ततरं गोपदस्फोटं निर्भागमपि स्वतादात्म्येनारोपितसादृश्यात्मकभागवन्तमक्रमं नित्यमपि सक्रममनित्यमिव व्यञ्जयन्ति। मलिनवक्रादर्शो निर्मलमप्युमुखं स्वसादृश्यमारोप्य मलिनं वक्रमिव यथा

व्यञ्जयति तद्वत् । एवं वर्णैरभिव्यक्तः स्फोटोऽर्थबोधकः । न च वर्णैरर्थस्यैव प्रत्येकमव्यक्ता, मेलनेन व्यक्तरताऽभिव्यक्तिरस्तु किं स्फोटेनेति वाच्यम् । व्यक्ताव्यक्तत्वस्य प्रत्यक्षज्ञानधर्मस्य परोक्षार्थज्ञानस्थत्वायोगात् । एकं पदमेकं वाक्यमिति स्फोटज्ञानं श्रोत्रजप्रत्यक्षमिति तस्यैव व्यक्ताव्यक्ततेत्यलं विस्तरेण ।' अस्य शब्दस्य शब्दप्रत्ययाभ्यामभेदेन विकल्पिते सङ्कीर्णेऽर्थे सङ्केतग्रहो लोकस्येति पूर्वं प्रतिपादितम् । तथा गौरिति शब्दो, गौरित्यर्थो, गौरिति प्रत्ययः, इत्याबालपण्डितं शब्दार्थप्रत्ययानामितरेतराभेदाध्यासात्सङ्करः प्रसिद्धः । तेषां शास्त्रयुक्तिभ्यां यः प्रविभागः प्रसिद्धः, वर्णव्यङ्ग्यं पदं पदव्यङ्ग्यं वाक्यं शक्त्यादिवृत्त्या बोधकमिति शब्दतत्त्वम्, अर्थो द्रव्यगुणकर्मजात्यादिभिर्वाच्यो लक्ष्यश्चेत्यर्थतत्त्वं शब्दजन्योऽर्थविषयो बुद्धिस्थप्रत्यय इति ज्ञानतत्त्वमिति गोशब्दवत् सर्वत्र विभागो ज्ञेयः तस्मिन्विभागे संयमात्सर्वशब्दादिवर्णोकारसूचकं सर्वभूतानां पशुपक्ष्यादीनां रुतज्ञानं भवति । इममर्थमेते वदन्तीति संयमी जानातीत्यर्थः ॥१७॥

১৭। শব্দ অর্থ ও জ্ঞান ইহাদের একে অন্যের অধ্যাস হইয়া শঙ্কর হয়, অর্থাৎ কথিত তিনটীকেই এক বলিয়া প্রতীতি জন্মে, বিভাগ করিয়া উহাদের প্রত্যেকে সংযম করিলে সকল জীবের

শব্দ বুঝিতে পারা যায়, পশুপক্ষী জীবগণ কি অভিপ্রায়ে কিরূপ শব্দ করিতেছে তাহা বুঝিতে সামর্থ্য হয়।

**संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम्॥ १८॥**

अनुभवक्लेशजाः स्मृतिक्लेशहेतवः, कर्मजाः सुखदुःखहेतवः, इतीमे संस्काराः सन्ति चित्तस्य धर्माः पूर्वजन्मपरम्परासञ्चितास्तेषु श्रुतेष्वनुमितेषु च संयमेन साक्षात्कृतेषु तद्धेतुत्वेन स्वीयपरकीयपूर्वजन्मपरम्परायाः साक्षात्कारो भवतीत्यर्थः। अत्र भगवान् जैगीषव्य उदाहरणम्। तस्य किल योगिवर्यस्य प्रकृतिवशिनः संस्कारसाक्षात्काराद्दशसु महाकल्पेषु देवतिर्यङ्नरादियोनिषु जन्मपरम्परां साक्षात्कृतवतो दिव्यविवेकख्यातिश्च प्रादुरभवत्। तं भगवान् आवट्यः पप्रच्छ,—"भगवन्! त्वया दृष्टेषु दशकल्पेषु सुखदुःखयोः किमधिकमनुभूतम्?" जैगीषव्य आह,—"हन्त, भो आयुष्मन्! देवनरादिषु पुनः पुनरुत्पद्यमानेन यत्किञ्चिदनुभूतं मया तत्सर्वं दुःखमेवेति।" आवट्य आह,—"किंप्रकृतिवशित्वमपि दुःखमेव येन दिव्या भोगा अक्षयाः सङ्कल्पमात्रेणोपतिष्ठन्त इति।" स उवाच,—"सत्यं, लौकिकसुखापेक्षया प्रधानवशित्वमनुत्तमं, परं कैवल्यापेक्षया दुःखमेव यतस्तृष्णातन्तुरनुच्छिन्नः सर्वदःखाकर-

तद्विच्छेदात्कैवल्यसुखं प्रसन्नमनुत्तमम्" इति भाष्यस्याऽऽख्यायिका। ननु यत्र संयमस्तस्य साक्षात्कार इति नियमात्कथं संस्कारसंयमात्पूर्वजन्मज्ञानमिति चेत्? सत्यं, सानुबन्धसंस्कारसंयमादनुबन्धत्वेन पूर्वजन्मनोज्ञानमुपपन्नमिति मन्तव्यम् ॥ १८ ॥

১৮। অনুভব ও অবিদ্যাদিজন্য সংস্কার, এবং কর্ম্মজন্য ধর্ম্মাধর্ম্মরূপ সংস্কার, এই উভয়বিধ সংস্কারের সংযমের দ্বারা সাক্ষাৎকার করিলে স্বকীয় বা পরকীয় ব্যক্তির পূর্ব্ব পূর্ব্ব জন্মের জ্ঞান হয়।

सिद्ध्यन्तरमाह—

## प्रत्ययस्य परचित्तज्ञानम् ॥ १९ ॥

परचित्तस्य संयमात्तत्साक्षात्कारो भवतीत्यर्थः ॥१९॥

১৯। পরকীয়চিত্তে সংযম করিয়া তাহার সাক্ষাৎকার করিলে পরকীয় চিত্তের প্রত্যক্ষ হয়।

## न च तत्सालम्बनं तस्याविषयीभूतत्वात् ॥२०॥

किं संस्कारसाक्षात्कारात्तदनुबन्धज्ञानवत्परचित्तसाक्षात्कारात्तदालम्बनं ज्ञानं भवति? नेत्याह, परचित्तमात्रं साक्षात्क्रियते। च त्वर्थः। सालम्बनं सविषयं तु न साक्षात्क्रियते तस्य सालम्बनस्याज्ञातत्वात् लिङ्गादिना ज्ञाते हि संयमप्रवृत्तिर्नाज्ञाते। तथा च यथा संस्कार वा संस्कारत्वलिङ्गेन—

"जन्मान्तरे यदभ्यस्तं तदद्याप्युपपद्यते।
हिंसाहिंसे मृदुक्रूरे तत्तास्तत्तस्य रोचते॥"

इत्याद्यागमेन च जन्मान्तरानुबन्धित्वं ज्ञातुं शक्यं, तथा परस्य चित्तममुकविषयमिति ज्ञातुमशक्यं लिङ्गाद्यभावात्। चित्तमात्रं तु परस्य हर्षादिलिङ्गेन ज्ञातम्। यदि परचित्तं ज्ञात्वा संयमेन साक्षात्कृत्यास्येदानीं किमालम्बनमिति स्वचित्तं प्रणिधत्ते तदा तत्कालीनमालम्बनं जानाति। रागादिवृत्तयस्तु चित्ताभेदात् साक्षात्क्रियन्त इति विशेषः॥ २०॥

২০। পরকীয় চিত্ত সামান্যতঃ অনুরক্ত কি বিরক্ত তাহার জ্ঞান হইতে পারে, অমুক বিষয়ে অনুরাগ বা বিরাগ তাহার জ্ঞান হয় না, কারণ বিষয় বিশেষ সহকারে সংযমের দ্বারা পরচিত্তের প্রত্যক্ষ হয় না।

सिद्ध्यन्तरमाह—

**कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासंप्रयोगेऽन्तर्द्धानम्॥ २१॥**

कायस्य यद्रूपं चाक्षुषत्वप्रयोजकमस्ति तस्मिन्संयमात्तस्य रूपस्य परचक्षुर्ग्राह्यत्वानुकूलायाः शक्तेः स्तम्भे प्रतिबन्धे सति परचाक्षुषज्ञानाविषयत्वे जातेऽन्तर्धानं योगिनेच्छयाचाक्षुषत्वं यथाकामं क्रियत इत्यर्थः। एतेन

स्त्रोयग्राह्यत्वग्रीरसगन्धानां संयमाच्छ्रोत्राद्यग्राह्यत्वसिद्धि-रुक्ता भवति ॥ २१ ॥

২১। শরীরস্বরূপে সংযম প্রয়োগ করিলে তাহার গ্রাহ্য শক্তি স্তম্ভিত ও চাক্ষুষ আলোকের সহিত তাহার সংযোগ হয় না সুতরাং উক্ত দ্বিবিধ কারণে যোগীর অন্তর্ধান সিদ্ধি জন্মে।

विभूत्यन्तरमाह—

**सोपक्रमं निरुपक्रमं च कर्म तत्संयमाद-परान्तज्ञानमरिष्टेभ्यो वा ॥२२॥**

पूर्वजन्मकृतमिदानीं स्थितं कर्म द्विविधम् । सोपक्रमं, निरुपक्रमं च फलदानव्यापारयुक्तं शीघ्र· विपाकं च सोपक्रमं, सातपदेशे प्रसारितेनार्द्रवस्त्रेण शीघ्रं शुष्यता तुल्यं, कालान्तरे फलप्रदमिदानीं निर्व्यापारं चिरविपाकं निरुपक्रमं, निरातपदेशे पिण्डीकृतार्द्रवस्त्रतुल्यम् । तत्र संयमेऽस्य साक्षात्काराद्विपाकस्यायुषोऽवसानमपरान्तशब्दितं ज्ञायते । परस्य प्रजापतेरन्तो महाप्रलयः । नरादीनां मरणमपरान्तः । तस्य ज्ञानममुष्मिन्देशेऽमुककाले मम देहवियोग इति साक्षात्कारः । तत्र सोपक्रमकर्मसाक्षात्कारे तद्विपाकस्य झटिति भोगार्थबहुशरीराणि गृहीत्वा योगी स्वेच्छया म्रियते । एकेन तत्र तद्भोगे

मरणविलम्बः । प्रसङ्गादाह—"अरिष्टेभ्यो वा" इति । तत्राध्यात्मिकारिष्टानि करपिहितकर्णपुटस्य प्राणघोषाश्रवणादीनि, आधिभौतिकानि यमभटदर्शनादीनि, आधिदैविकान्यकस्मात्स्वर्गदर्शनादीनि, एतान्यविषयासयन्त्यरिष्टानि त्रिविधानि मरणलिङ्गानि तेभ्यो वा मरणज्ञानं भवत्ययोगिनोऽपीत्यर्थः ॥२२॥

২২। সোপক্রম ও নিরুপক্রম ভেদে কর্ম্ম দ্বিবিধ সোপক্রম (যে ফল প্রদান করিতে আরম্ভ করিয়াছে) নিরুপক্রম (যাহা বিলম্বে ফলদান করিবে) এই উভয়বিধ কর্ম্মে সংযম করিলে মরণ জ্ঞান (কোন দেশে কখন কিরূপে মৃত্যু হইবে) তাহা জানা যায়। নানাবিধ অরিষ্ট অর্থাৎ মরণচিহ্ন দ্বারা ও মৃত্যুজ্ঞান হইয়া থাকে।

## मैत्र्यादिषु बलानि ॥२३॥

. . पूर्वं मैत्रीकरुणामुदितासु संयमो विहितस्तेन तासां बलानि वीर्याणि भवन्ति। यैर्योगी प्राणिमात्रस्य सुखकरः सुहृद्भवति, दुःखादुद्धर्ता भवति, अपक्षपाती भवति। उपेक्षा त्वौदासीन्यमात्रं न तस्य बलं किंचिदस्ति संयमभावादित्यर्थः ॥२३॥

২৩। (প্রথমপাদোক্ত) মৈত্রী করুণা ও মুদিতারূপ চিত্ত প্রকাশের উপায় তিনটীতে সংযম করিলে সেই সেই বিষয়ে অমোঘ শক্তি জন্মে,যাহার উৎপত্তি হইলে ইচ্ছামাত্রেই যোগিগণ প্রাণীমাত্রের সুখ দান ও দুঃখ হরণ অনায়াসে করিতে পারেন।

बलेषु हस्तिबलादीनि ॥२४॥

हस्तिहनुमद्गरुड़ादिबलेषु तद्भावने संयमात्तानि बलानि योगिनः प्रादुर्भवन्ति। चित्तस्य स्वतःसर्वसामर्थ्यादित्यर्थः ॥२४॥

২৪। হস্তী প্রভৃতির বলে সংযম করিলে সেই সেই বল লাভ হয়, আদি শব্দ দ্বারা হনুমান, গরুড় প্রভৃতির বল বুঝিতে হইবে।

प्रवृत्त्यालोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् ॥२५॥

ज्योतिष्मती प्रवृत्तिः प्रागुक्ता। तस्याः ज्योतिःसाक्षात्काररूपप्रवृत्तेर्य आलोक आस्पदं सर्वतो विप्रसृतं निर्मलबुद्धिसत्त्वं, तस्य सूक्ष्मे परमाण्वादौ, भूतव्यवहिते निध्यादौ, विप्रकृष्टे मेर्वन्तरवर्तिरसायनादौ, न्यासात्प्रक्षेपात्तेषां ज्ञानं साक्षात्कारो भवति। सौरालोकसंयोगाद् घटादिज्ञानवदित्यर्थः ॥२५॥

২৫। জ্যোতিষ্মতী প্রবৃত্তির আলোক অর্থাৎ সত্ত্বপ্রকাশকে সূক্ষ্ম-ব্যবহিত-দূরবর্ত্তী পদার্থে নিক্ষেপ করিলে সেই সেই বিষয়ের জ্ঞান হয়।

एवं संयमेन साक्षात्कृतबुद्ध्यालोकद्वारा ज्ञानमुक्त्वा भौतिके तद्द्वारा तदाह—

भुवनज्ञानं सूर्ये संयमात् ॥२६॥

दिवि देदीप्यमानमार्तण्डमण्डले सुषुम्नाऽऽदिद्वारके सहस्ररश्मिमालिनि संयमाद् द्वष्ट्याभिन्नं चित्तं चतुर्दशभुवनानि साक्षात्करोतीत्यर्थः ॥२६॥

২৬। সুষুম্না নাড়ীকে দ্বার করিয়া সূর্য্যমণ্ডলে সংযম করিলে সমস্ত ভুবনের জ্ঞান জন্মে।

चन्द्रे ताराव्यूहज्ञानम् ॥२७॥

चन्द्रे संयमान्नक्षत्राणां सन्निवेशविशेषं साक्षात्करोति। सूर्यस्य नक्षत्राभिभावकत्वात्तत्संयमात्तज्ज्ञानं न भवतीति भावः ॥२७॥

২৭। চন্দ্রমণ্ডলে সংযম করিলে তারাগণের ব্যূহের অর্থাৎ কোথায় কোন তারা আছে তাহা বুঝিতে পারা যায়।

ध्रुवे तद्गतिज्ञानम् ॥२८॥

ध्रुवे संयमात्तासान्ताराणां गतिं जानाति। इयं ताराऽनेन ग्रहेण सङ्गानेन यथा एतावन्तं कालं गच्छतीति ॥२८॥

২৮। ধ্রুবতারায় সংযম হইলে তারাগণের গতি জানা যায়। এই তারা এই কালে এই রাশিতে এই নক্ষত্রের সহিত গমন করে ইহা বিশেষ করিয়া জানিতে পারা যায়।

एवं बाह्यसिद्धीरुक्त्वाऽऽध्यात्मिकसिद्धीराह—

नाभिचक्रे कायव्यूहज्ञानम् ॥२९॥

कायस्य मध्यभागे यन्नाभिचक्रमाधारविशेषचक्राभ्यां

চতুঃষট্পত্রাভ্যামুপরিস্থিতং দশপত্রম্ ; তস্মিন্ সংয-মাদ্দেহস্য সংনিবেশং জানাতি। বাতপিত্তশ্লেষ্মাণস্ত্রয়ো দোষাঃ। ত্বগ্-রুধিরমাংসস্নাখ্যস্থিমজ্জাশুক্রাণি সপ্ত ধাতবঃ। তেষাং পূর্বং পূর্বং বাহ্যমিত্যেষ কায়বিন্যাসঃ॥২৯॥

২৯। শরীরের মধ্যস্থলে নাভিচক্রে সংযম করিলে কায়ব্যূহ ( দেহান্তর্গত সমস্ত পদার্থের ) সম্যক্ জ্ঞান হয়। বাত পিত্ত ও শ্লেষ্মা এই তিনের দোষ, সপ্তধাতু ( ত্বক্ রুধির মাংস মেদ অস্থি মজ্জা ও শুক্র ) ইহাদের পূর্ব্ব পূর্ব্ব উত্তরোত্তরের কারণ। অর্থাৎ রস হইতে রক্ত, রক্ত হইতে মাংস ইত্যাদি ক্রমে উৎপত্তি হইয়া থাকে।

## কণ্ঠকূপে ক্ষুৎপিপাসানিবৃত্তিঃ ॥৩০॥

জিহ্বাতন্তোরধস্তাৎকণ্ঠস্য কূপাকারঃ প্রদেশোঽস্তি। যত্র প্রাণাদেঃ সংঘর্ষাৎক্ষুৎপিপাসে ভবতঃ। তত্র সংযমাত্তন্নিবৃত্তিরিত্যর্থঃ ॥৩০॥

৩০। জিহ্বার নিম্নে কণ্ঠশিরা, তাহার নিম্নে কণ্ঠ ( কণ্ঠশিরা মূল হইতে বক্ষঃস্থল পর্য্যন্ত ) তন্নিম্নে যে কূপাকার স্থান আছে তাহাতে সংযম করিলে ক্ষুধা তৃষ্ণা থাকে না।

## কূর্মনাড্যাং স্থৈর্য্যম্ ॥৩১॥

কূপাদধ উরসি কূর্মাকারা নাড্যস্তি। তত্র সংযমাত্তত্রাবিষ্টস্য চিত্তস্য স্থৈর্য্যং সিদ্ধ্যতীত্যর্থঃ ॥৩১॥

৩১। উক্ত কূপাকার স্থানের নিম্নে বক্ষঃস্থলে যে নাড়ী কূর্ম্মাকার আছে তাহাতে সংযম করিলে চিত্তের স্থিরতা হয়।

मूर्द्धज्योतिषि सिद्धदर्शनम् ॥३२॥

शिरःकपाले यच्छिद्रं ब्रह्मरन्ध्राख्यं सुषुम्नायोगा· हृदयस्थचित्तमणिप्रभायोगाच्च भास्वरं मूर्द्धज्योतिः तत्र संयमात् सिद्धानदृश्यानपि पश्यतीत्यर्थः ॥३२॥

৩২। হৃদয়স্থ প্রভাস্বর জ্যোতি সুষুম্নাপথে ব্রহ্মরন্ধ্রে প্রকাশিত আছে, তাহাতে সংযম করিলে অন্তরীক্ষবাসী সিদ্ধগণের দর্শন হয়।

प्रातिभाद्वा सर्वम् ॥३३॥

विवेकख्यातिर्हि प्रसंख्यानं संसारतारकं तदर्थं संयमे क्रियमाणे प्रसंख्यानोपसूचकं प्रतिभया जन्ममात्रेण जातं प्रातिभं ज्ञानं भवति। तेन वा योगी सर्वं जानाति। यथा सूर्योदये सूचकारुणप्रभया लोकः पश्यति तद्वत्। राजवार्त्तिके तु सर्वनिमित्तानपेक्षमनोमात्रजन्यं यथाऽर्थं झटित्युत्पद्यमानं ज्ञानं प्रतिभा। तस्याः संयमात् प्रातिभं विवेकख्यातेः पूर्वभावितारकमुदेति। तेन सर्वं योगी जानातीति व्याख्यातम् ॥३३॥

৩৩। বিবেক খ্যাতিরূপ প্রসংখ্যান জ্ঞান সংসার হইতে তরণ করে বলিয়া তাহাকে তারক বলে। এবং নিজের প্রতিভাদ্বারা তর্ক হইতে উৎপন্ন বলিয়া সেই জ্ঞানকে প্রাতিভ বলে। তাহাতে সংযম করিলে যোগী সকল জানিতে পারে।

हृदये चित्तसंवित् ॥३४॥

अधोमुखे हृत्पद्मे चित्तस्य स्थाने संयमात्स्ववासनस्य चित्तस्य संविद्भवतीत्यर्थः ॥३४॥

৩৪। অধোমুখ হৃদয়পদ্মে চিত্তের স্থান, তথায় চিত্ত সংযম করিলে সংসাররহিত চিত্তের জ্ঞান জন্মে।

**सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः पारार्थ्यात्स्वार्थसंयमात्पुरुषज्ञानम् ॥३५॥**

बुद्ध्यात्मनोर्भोग्यभोक्तृत्वेनात्यन्तभिन्नयोर्यः प्रत्ययाविशेषो बुद्धिपरिणामः सुखदुःखमोहप्रत्ययः पुरुषस्य प्रतिबिम्बग्राहिभिरविशेषः सारूप्यं प्रतिबिम्बद्वारा सुखाद्यारोपः स भोगो बुद्धिस्थो दृश्यत्वात्परार्थः पुरुषस्य भोक्तुः शेषभूतस्तस्मात्परार्थाद्भोगाच्चित्प्रतिबिम्बोपसर्जनकप्रत्ययरूपाज्जडादन्यश्चित्स्वभावः प्रतिबिम्बः स्वार्थो नान्यशेषः। तत्र संयमात्पुरुषस्य साक्षात्कारो भवति। सोऽपि स्वप्रकाशेन पुरुषेण दृश्यो बुद्धिस्थो न पुरुषं विषयीकर्तुमीष्टे। किं त्वनात्माकारत्वशून्यत्वे नात्ममात्रप्रतिबिम्बग्राहित्वात्पुरुषज्ञानमित्युच्यते। तथा च श्रुतिः—"विज्ञातारमरे केन विजानीयात्" इति॥३५॥

৩৫। বুদ্ধি পরিণামী, পুরুষ অপরিণামী, সুতরাং ধর্ম্ম সাম্যে উভয় সমান নহে, তথাপি বুদ্ধির সারূপ্য বশতঃ চিত্ত ধর্ম্ম সুখ

দুঃখাদির ভোগ পুরুষে আরোপিত হয়। কারণ বুদ্ধি ও তাহার বৃত্তি পুরুষের নিমিত্ত ; যে বস্তু পরার্থ নহে কেবল চিৎ স্বরূপ সেই পুরুষে সংযম করিলে পুরুষ সাক্ষাৎকার সিদ্ধ হয়।

संप्रत्यस्य संयमस्य पुरुषसाक्षात्कारात्प्राग्भवाः सिद्धीर्दर्शयति—

**ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते ॥३६॥**

ततः स्वार्थसंयमात्प्रातिभं पूर्वोक्तं सर्वगोचरं ज्ञानं मनोमात्रेण योगजन्यधर्मानुग्रहीतेन जायते। दिव्यानां शब्दस्पर्शरूपरसगन्धानां ग्राहकाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि क्रमेण श्रावणवेदनादर्शास्वादवार्तासंज्ञानि जायन्ते दिव्यशब्दग्राहकं श्रोत्रं यदा योगिनो भवति तदा तस्य श्रोत्रस्य श्रावणमिति तान्त्रिकी संज्ञा भवति तथा घ्राणस्य वार्ता, संज्ञेत्याद्यूहनीयम् ॥३६॥

৩৬। পূর্ব্বোক্ত স্বার্থ সংযম হইতে আত্মজ্ঞান হওয়া পর্য্যন্ত যোগীদিগের ব্যুত্থানকালে ও প্রতিভাদি নামক অলৌকিক সিদ্ধি জন্মিয়া থাকে।

ननु तत्त्वयं योगी कृतकृत्य इत्यत आह—

**ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३७ ॥**

ते प्रातिभाऽऽदयः समाधौ निःश्रेयसफले रतस्योपसर्गा विघ्ना भवन्ति। अतो मुमुक्षुर्हि तानुपेक्षते।

न ह्यात्मसम्बोधनं विना सिद्धिकोट्याऽपि कृतकृत्यता भवति। तदुक्तम्, परमगुरुणा श्रीकृष्णेन—
"एतद् बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत" इति। व्युत्थाने रतस्य तु ताः सिद्धयो भवन्तीत्यर्थः॥ ३७॥

৩৭। সেই পূর্ব্বোক্ত প্রাতিভাদি সিদ্ধিসকল মুক্তিকামী যোগীর পক্ষে সমাধির বিঘ্ন হইলেও ব্যুত্থানরতব্যক্তির নিকট সিদ্ধি বলিয়া গণ্য হইয়া থাকে।

तदेवं संयमस्य ज्ञानरूपां विभूतिमात्मदर्शनान्ता-मुक्त्वा क्रियारूपामाह—

**बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः॥ ३८॥**

सर्वत्र व्याप्तिशीलस्य चित्तस्य स्वशरीरमात्रे सङ्कोचेन स्थितिर्बन्धः तस्य कारणं धर्माधर्मौ तयोः संयमेन शैथिल्यं भवति। प्रचरत्यनेन चित्तमिति प्रचारो नाडीसङ्घः, तस्यापि संयमेन संवेदनमधुनाऽनया नाड्या सञ्चरतीति ज्ञानं भवति, तथा प्राणेन्द्रियमार्गनाडीज्ञानं भवति। तथा च बन्धकरज्जुनाशे मार्गज्ञस्य स्वपरवेश्मप्रवेशवच्चित्तस्य परकाये मृते जीवति वा प्रवेशो भवति चित्तमन्विन्द्रियाणि विशन्ति मधुकरराजमिव मक्षिका इत्यर्थः॥ ३८॥

৩৮। সর্ব্বত্র প্রকাশ স্বভাব চিত্তের নিজের শরীরে সংকোচে

থাকার নাম বন্ধ। তাহার কারণ ধর্ম্ম ও অধর্ম্ম, সংযমের দ্বারা সেই ধর্ম্মাধর্ম্মের শিথিলতা হয়। এবং যাহাদ্বারা চিত্ত বিচরণ করে তাহার নাম প্রচার অর্থাৎ নাড়ী সমূহ। তাহার সংযমের দ্বারা প্রাণ ও ইন্দ্রিয় গমনপথের জ্ঞান জন্মে। এই জ্ঞান দ্বারাই যোগী নিজশরীরে বা পরশরীরে প্রবেশ করিতে পারে।

## उदानजयाज्जलपङ्ककण्टकादिष्व-
## सङ्ग उत्क्रान्तिश्च ॥ ३९ ॥

द्वयी खल्विन्द्रियाणां प्रवृत्तिः। बाह्याऽऽह्याऽऽलोचनरूपा, आन्तरी जीवनयोनिप्रयत्नरूपा सर्वकरणसाधारणी, अस्याः कार्याः पञ्च प्राणादयः। तत्र नासिकाऽग्रादाहृदयं स्थितः प्राणः, आहृदयादानाभि स्थितः समानो भुक्तं समं नयतीति, आनाभेरापादतलं स्थितोऽपानो मलमपनयतीति, आनासाग्रादाशिरोवृत्तिरुदान उत्क्रान्तिहेतुः, सर्व्वदेहव्यापी व्यानः, तेषु प्राणः श्रेष्ठः। तत्रोदानस्य संयमेन जयादम्बिपङ्ककण्टकादिष्वसक्तो योगी लघुत्वादुपरि गच্ছति, स्वेच्छया मरणञ्च लभत इत्यर्थः ॥ ३९ ॥

৩৯। ইন্দ্রিয় সমূহের কার্য্য দুই প্রকার, বাহ্য কার্য্য ও আভ্যন্তর কার্য্য, জীবনধারণ তাহাদের আভ্যন্তরীণ কার্য্য। যে ক্রিয়া দ্বারা

হৃদয় হইতে নাসিকা পর্য্যন্ত, ঔদার্য্য বায়ুর গতাগতি সাধিত হয় সেই ক্রিয়ার নাম প্রাণ। হৃদয় হইতে নাভি পর্য্যন্ত সমান, সে ভুক্ত দ্রব্য পরিপাক করিয়া থাকে। নাভি হইতে পাদতল স্থিত অপান মল ত্যাগ করিয়া থাকে, নাসিকা হইতে সমস্ত শির ব্যাপি উদান, সর্ব্বদেহ ব্যাপী ব্যান, তাহার মধ্যে প্রাণ শ্রেষ্ঠ। ইহাদের মধ্যে উদানে সংযম সাধিত হইলে জল, কর্দ্দম, কণ্টক প্রভৃতির উপরি অনায়াসে পরিভ্রমণ করিতে পারা যায় এবং যোগী মরণকে ইচ্ছাধীন করিতে পারেন।

**समानजयाज्ज्वलनम् ॥ ४० ॥**

**नाभिनिकटस्थाग्निव्यापिनः समानस्य वशीकारादग्नेर्ज्वलनं भवति, येन ज्वलन्निव दृश्यत इत्यर्थः। एवं प्राणादिजयात्स्वेच्छया तत्क्रियासिद्धिर्बोध्या ॥४०॥**

৪০। নাভির নিকটস্থ জঠর অগ্নিকে ব্যাপিয়া সমান নামক যে বায়ু আছে তাহাকে সংযম দ্বারা জয় করিতে পারিলে অগ্নির ন্যায় তেজস্বী হইতে পাবে এবং প্রাণাদি বায়ু জয় করিলে ইচ্ছাপূর্ব্বক প্রাণাদির জয় সাধন করা যায়।

**श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम् ॥ ४१ ॥**

**आहङ्कारिकस्यापि श्रोत्रस्याकाशेनाधाराधेयभावोऽस्ति। उपलक्षणमेतत्। त्वग्वाय्वोः, चक्षुस्तेजसोः, अप्-रसनयोः, घ्राणभूम्योः, सम्बन्धेषु संयमाद्दिव्यानी-**

न्द्रियाणि श्रावणवेदनाऽऽद्युक्तसंज्ञानि सम्भवन्ति, यैर्दिव्यशब्दादीन् युगपज्जानातीत्यर्थः ॥ ४१ ॥

৪১। আহঙ্কারিক শ্রোত্রের আকাশের সহিত আধার (আশ্রয়) আধেয় (আশ্রিত) ভাব আছে। এই সূত্রে শ্রোত্রাকাশশব্দ উপলক্ষণ। এই প্রকার ত্বগিন্দ্রিয়ের বায়ুর, চক্ষুর সহিত তেজের, রসনার সহিত জলের ও ঘ্রাণেন্দ্রিয়ের সহিত ক্ষিতির যে আধার-আধেয় সম্বন্ধ আছে, যোগী তাহা জ্ঞাত হইয়া সেই বিষয়ে সংযম করিলে দিব্য অর্থাৎ অলৌকিক স্পর্শাদি শক্তির লাভ করিতে পারেন। অর্থাৎ যাহা দ্বারা অলৌকিক শব্দাদি একসঙ্গে জানিতে পারেন।

## कायाकाशयोः सम्बन्धसंयमाल्लघुतूल-समापत्तेश्चाकाशगमनम् ॥४२॥

तयोः संयोगं जित्वा लघुनि तूलादौ वा तद्भावेन समाधिना लघुकायो भूत्वाऽऽदौ जले विहरति। तत ऊर्णनाभितन्तुषु विहरति। पश्चात्सूर्यरश्मिषु। ततो यथेष्टमाकाशे गच्छतीत्यर्थः ॥ ४२ ॥

৪২। শরীর ও আকাশ এই উভয়ের সংযোগ ( সম্বন্ধ ) আছে, তাহাকে জয় করিয়া যোগী লঘুবস্তুতে ও তুলাদিতে লঘুভাবাপন্ন সমাধির দ্বারা লঘুকায় হইয়া প্রথমতঃ জলে পরে লূতাতন্তুতে ( মাকড়সার সূত্রে ) অনন্তর সূর্য্যরশ্মিতে তাহার পর আকাশে ইচ্ছানুরূপ বিচরণ করিতে পারেন।

वहिरकल्पिताव्वृत्तिर्महाविदेहा ततः
प्रकाशावरणक्षयः ॥ ४३ ॥

देहेऽहंभावे सत्येव, मे मनो वहिरस्त्वीति कल्पनया मनसा देहाद्वहिर्वृत्तिलाभो भवति, सा कल्पिता-विदेहाऽऽख्या धारणा तया देहेऽहंभावत्यागे सति स्वत एव वहिर्वृत्तिलाभो भवति सेयमकल्पिता महाविदेहाऽऽख्या धारणा। ततः प्रकाशस्वभावस्य चित्तस्य क्लेशकर्माद्यावरणक्षयो भवति। ततः सर्वज्ञत्वलाभ इत्यर्थः ॥ ४३॥

৪৩। শরীরে অহং ভাব থাকিলে আমার মন বাহিরে থাক এই প্রকার কল্পনা দ্বারা দেহ হইতে মনের বহির্বৃত্তি লাভ হয়, তাহার নাম কল্পিতা মহাবিদেহা নামক ধারণা। সেই মহা-বিদেহা নামক ধারণা হইতে প্রকাশ স্বভাব চিত্তের ক্লেশ কর্ম্মাদি আবরণ ক্ষয় হয়। সেই ক্লেশ কর্ম্মাদি ক্ষয় হইতেই সর্ব্বজ্ঞত্ব লাভ হইয়া থাকে।

स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमा-
द्भूतजयः ॥ ४४ ॥

पञ्चभूतानां स्थूलं दृश्यमानमवयवसंस्थानं पृथिवी-त्वादिजातिमत् क्रमेणैकैकन्यूनैः शब्दादिभिः पञ्चगुणैः स्थूलैर्युक्तमित्येकं रूपम्। अथ द्वितीयं तेषां स्वरूपं

क्रमेण काठिन्यस्नेहौष्ण्यप्रेरणसर्वगतत्वलक्षणं, प्रेरणा वायोस्तृणादिवाहकत्वम् । अथ तृतीयं तेषां रूपम् सूक्ष्मं कारणं परमाणवः, तेषां सूक्ष्माणि पञ्च-तन्मात्राणि । अथ चतुर्थं तेषां रूपं गुणत्रयं तद्धि स्वकारणत्वेनान्वेतीत्यन्वयः सामान्यम् । अथ पञ्चमं तेषां भूतानां रूपमर्थवत्त्वं भोगापवर्गसामर्थ्यं गुणनिष्ठं स्वेषु गुणान्वयादागतम् । एवं भूतानां पञ्चरूपेषु कार्यस्वरूप-हेतुषु स्थूलादिक्रमेण संयमाद्भूतानि योगिसङ्कल्पानुसारीणि भवन्ति, वत्सानुसारिण्य इव गाव इत्यर्थः ॥४३॥

৪৪। পঞ্চভূতের ক্রমে এক এক করিয়া ন্যূন স্থূল শব্দাদি পঞ্চগুণযুক্ত পরিদৃশ্যমান স্থূল ক্ষিতি, অপ, তেজ মরুৎ, ব্যোম জাতীয় প্রথম অবস্থা। তাহাদের দ্বিতীয় রূপ ক্রমে কাঠিন্য, স্নেহ, উষ্ণ, প্রেরণা, সর্ব্বজ্ঞত্ব তৃতীয়াবস্থা তাহাদের সূক্ষ্ম কারণ পরমাণুসকল তাহার সূক্ষ্মতন্মাত্র সকল; তাহাদের চতুর্থরূপ সত্ব, রজঃ, তমঃ গুণত্রয়। স্বকারণরূপে সমস্ত অন্বয়ী। সেই ভূতের পঞ্চমরূপ অর্থ-বত্ত অর্থাৎ ভোগাবর্গ সামান্য, এই প্রকার পঞ্চ অবস্থানুরূপ ভূতে স্থূলাদিক্রমে সংযম করিলে বৎসানুযায়ী গাভীর ন্যায় যোগীর সঙ্কল্পা-নুযায়ী ভূতসকল হইয়া থাকে।

**ततोऽणिमादिप्रादुर्भावः कायसम्पत्त-**
**द्धर्मानभिघातश्च ॥ ४५ ॥**

ততো ভূতজয়াদ্‌যোগিনোঽণিমাদ্যষ্টসিদ্ধয়ঃ প্রাদুর্ভবন্তি। পরমাণুতুল্যত্বমণিমা, বিভুত্বং মহিমা, তূলপিণ্ডবল্লঘুত্বং লঘিমা, মেরুবদ্‌ গুরুত্বং গরিমা, অঙ্গুল্যা চন্দ্রসংস্পর্শনং প্রাপ্তিঃ, সত্যসঙ্কল্পত্বং প্রাকাম্যম্, ভূতনিয়ন্তৃত্বং বশিত্বং, ভূতস্রষ্টৃত্বমীশিত্বম্, ইত্যষ্টৈশ্বর্যাণি। অত্র প্রাপ্ত্যন্তানি স্থূলসংযমাৎসিদ্ধ্যন্তি। স্বরূপসংযমাৎপ্রাকাম্যম্। অবশিষ্টং হেতুসংযমাদিতি বিভাগঃ। কায়সম্পদ্বক্ষ্যতে, তস্য কায়স্য ভূতধর্মৈঃ কাঠিন্যাদিভিরনভিঘাতশ্চ ভূতজয়াৎ সিদ্ধ্যতি। যেন শিলাঽন্তঃ প্রবিশতি, শীতোষ্ণাদয়ো ন বাধন্ত ইত্যর্থঃ॥ ৪৫॥

৪৫। সেই ভূত জয় হইতে যোগীর অণিমা, বিভূত্ব মহিমা, তুলারাশির ন্যায় লঘু লঘিমা, পর্ব্বতের ন্যায় গুরুত্ব গরিমা, অঙ্গুলি দ্বারা চন্দ্র স্পর্শনের নাম প্রাপ্তি, ইচ্ছার অনভিঘাত প্রকাম্য, ভূত সমূহের নিয়োগ কর্তৃত্ব বশিত্ব, ভূতসৃজনকর্তৃত্ব ঈশিত্ব এই আট-প্রকার ঐশ্বর্য্য। ইহার মধ্যে স্থূলে সংযম করিলে অণিমা, গরিমা এবং প্রাপ্তির সিদ্ধি হইয়া থাকে। স্বরূপে সংযম করিলে প্রকাম্যের এবং হেতু সংযম করিলে বশিত্ব এবং ঈশিত্বের সিদ্ধি হয়। কায় সম্পদ্ বলা হইতেছে সেই শরীরের কাঠিন্যাদি ভূত ধর্ম্মের দ্বারা যোগীর শরীরাদি ক্রিয়ার প্রতিবন্ধক করিতে পারে না। যাহা দ্বারা শিলার মধ্যেও প্রবেশ করিতে পারে, শীতোষ্ণাদি কোন প্রতিবন্ধক থাকে না।

**रूपलावण्यबलवज्रसंहननत्वानि**
**कायसंपत् ॥ ४६ ॥**

चक्षुःप्रियं रूपं, लावण्यं सर्वाङ्गसौन्दर्यं, बलं वीर्यं, वज्रस्येव संहननमवयवव्यूहो यस्य तद्भावो वज्रसंहननत्वं, हनुमति प्रसिद्धम् ॥ ४६ ॥

৪৬। চক্ষুঃ প্রিয়রূপ, সর্ব্বাঙ্গ সৌন্দর্য্য লাবণ্য, অতিবীর্য্য এবং বজ্রের ন্যায় অতি দৃঢ়, এই সমস্ত শরীরের সম্পৎ জন্মে। অতিশয় বীর্য্যাদি হনুমানে প্রসিদ্ধ।

भूतजयानन्तरमिन्द्रियजयोपायमाह—

**ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमा-**
**दिन्द्रियजयः ॥ ४७ ॥**

शब्दः षड्जादिः, स्पर्शः शीतादिः, रूपं पीतादिः, रसो मधुरादिः, गन्धः सुरभ्यादिरिति, सामान्यविशेषात्मकशब्दादिगोचराः पञ्च वृत्तयः कार्याः श्रोत्रादीन्द्रियाणां ग्रहणानि प्रथमं रूपं, प्रकाशकत्वं स्वरूपं तेषां द्वितीयम्, अस्मितालक्षणसात्विकाहङ्कारः कारणं तेषां तृतीयम्। अन्वयार्थवत्त्वे चतुर्थपञ्चमे व्याख्याते। तेषु पञ्चस्विन्द्रियरूपेषु संयमादिन्द्रियजयो भवति ॥ ४৭ ॥

৪৭। গ্রহণ, স্বরূপ, অস্মিতা, অন্বয় এবং অর্থবত্ত্বরূপে পাঁচ

প্রকারে বিভক্ত যে শব্দ, স্পর্শ, রূপ, রস, গন্ধ তাহাতে সংযম করিলে যোগী ইন্দ্রিয় জয় করিতে পারে।

ততঃ কিং তত্রাহ—

ততো মনোজবিত্বং বিকরণভাবঃ
প্রধানজয়শ্চ ॥ ৪৮॥

মনোবৎকায়স্যানুত্তমো গতিলাভো মনোজবিত্বং, বিদেহানপেক্ষাণামিন্দ্রিয়াণাং দূরব্যাধ্যর্থজ্ঞানে বিকরণত্বং বিকরণভাবঃ, প্রধানস্যান্বয়স্য চতুর্থরূপস্য জয়ঃ সর্বজগদ্বশিত্বম্ ইতি সিদ্ধয় ইন্দ্রিয়জয়াদ্ভবন্তীত্যর্থঃ। এতা অণিমাদ্যাঃ প্রধানজয়ান্তাঃ সিদ্ধয়োঽস্মিন্ শাস্ত্রে মধুপ্রতীকা উচ্যন্তে, মধুন একদেশবদাস্বাদ্যন্ত ইতি মধুপ্রতীকা মধুতুল্যা ইত্যর্থঃ। যদ্বা স্থূলাদিপ্রধানান্তবস্তুবিষয়া যোগজন্যর্তম্ভরপ্রজ্ঞা মধু তৎপ্রতীকং কারণং সাক্ষাৎকৃতং ভূতেন্দ্রিয়জয়দ্বারা যাসাং তা মধুপ্রতীকাঃ ॥ ৪৮ ॥

৪৮। সেই ইন্দ্রিয় জয় হইতে মনোজবিত্ব নামক মনের ন্যায় শরীরের গতিলাভ হয়, স্থূল শরীরকে অপেক্ষা না করিয়া (ইচ্ছানুসারে অতি দূরদেশে অতীতাদি বিষয়ে) বিকরণ ভাব নামক ইন্দ্রিয়ের বৃত্তিলাভ যোগিগণের হইয়া থাকে। এই সকল অণিমাদি করিয়া প্রধান জয় পর্য্যন্ত সিদ্ধি সকলকে এই (যোগ) শাস্ত্রে মধুপ্রতীকা

বলিয়া থাকে। ইহার আস্বাদ মধুর ন্যায়। মধুপ্রতীকা অর্থ মধুতুল্য।

एवं संयमात् ज्ञानक्रियासिद्धयः साक्षाच्छुद्धाद्वारा आविवेकख्यात्यर्था उपन्यस्ताः। संप्रति विवेकख्याति-रवान्तरसिद्धिमाह —

**सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावा-धिष्ठातृत्वं सर्वज्ञातृत्वञ्च ॥४९॥**

पूर्वोक्तास्वार्थसंयमेन निर्द्धूतरजस्तमोमलस्यान्तःकरणस्य जये वशीकारसंज्ञायामपरस्यां विरक्तौ स्थितस्य बुद्धिसत्त्वात्मनोर्भेदख्यातिर्जायते तन्मात्रस्य तदावृत्ति-परस्य योगिनः सर्वेषां भावानां प्रधानतत्परिणामानाम-धिष्ठातृत्वं, नियन्तृत्वं, सर्व्वेषां भूतभवद्भाविनां ज्ञातृत्वञ्च सिद्ध्यति। एषा विशोका नाम सिद्धिः ॥४९॥

৪৯। পূর্ব্বোক্ত স্বার্থ সংযমের দ্বারা রজঃ তমঃ বিদূরিত অন্তঃকরণের জয় করিলে বশীকার সংজ্ঞা নামক (বৈরাগ্য) বুদ্ধিসত্ত্ব ও আত্মার ভেদজ্ঞান হইয়া থাকে এবং সকল ভাব পদার্থে এবং প্রধান ও তাহার পরিণাম বস্তুতে অধিষ্ঠাতৃত্ব ও সর্ব্বজ্ঞাতৃত্ব সিদ্ধ হয়। ইহার নাম বিশোকা সিদ্ধি।

अधुना विवेकख्यातेर्मुख्यां सिद्धिमाह—

**तद्वैराग्यादपि दोषवीजक्षये कैवल्यम् ॥५०॥**

तस्यां विशोकायां सिद्धौ वैराग्यात्तद्धेतौ विवेकख्यातावपि वैराग्यं परं भवति । ततो दोषाणां क्लेशानां बीजं भ्रान्तिसंस्कारस्तस्य क्षये सर्वात्मना तिरोभावे सति चित्तस्य परवैराग्यसंस्कारशेषतायां पुरुषस्य स्वरूपप्रतिष्ठत्वं कैवल्यं सिद्ध्यति । इयं संस्कारशेषाऽऽख्यासिद्धिः ॥ ५० ॥

৫০। পূর্ব্বোক্ত বিশোকায় সিদ্ধি সিদ্ধ হইলে বৈরাগ্যবশতঃ তাহার হেতু বিবেকখ্যাতি উৎপন্ন হইলে পরবৈরাগ্য জন্মে। তাহার ক্লেশের কারণ ভ্রান্তিসংস্কারে সম্পূর্ণরূপে তিরোভাব হইলে চিত্তের পরবৈরাগ্যসংস্কারের শেষ হইয়া গেলে পুরুষে স্বরূপ প্রতিষ্ঠা নামক কৈবল্য সিদ্ধি হয়। ইহা সংস্কারাশেষ নামক সিদ্ধি।

अत्र विघ्नोत्पत्तौ निरासोपायमाह—

स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् ॥५१॥

चत्वारः खल्वमी योगिनः । प्रथमकल्पिको, मधुभूमिकः, प्रज्ञाज्योतिः, अतिक्रान्तभावनीयश्च। तत्राद्यः संयमे प्रवृत्तमात्रो न किञ्चित्परचित्तादिकं जानाति । द्वितीयः संप्रज्ञातयोगेन मधुमतीं चित्तभूमिमृतम्भराप्रज्ञाऽवस्थां लब्ध्वा भूतेन्द्रियाणि साक्षात्कृतानि विजिगीषते तज्जयद्वारा पूर्वोक्ताः क्रमेण मधुप्रतीका विशोका

संस्कारशेषा चेति तिस्रो भूमीर्लब्धुकामः । तृतीयस्तु जितभूतेन्द्रियत्वान्महेन्द्रादिभिरन्येभ्यो लब्धभूमिद्वयो विशोकाऽऽदिभूमिद्वयस्त्रिषाधग्रिषया स्वार्थसंयमयत्नंवान् । चतुर्थस्तु भगवान्महाऽनुभावो लब्धविवेकाल्ल:भूमित्रयो विरक्तो विघ्नशङ्काशून्यो जीवन्मुक्तश्चतुर्थभूमौ वर्त्तते । यस्य सप्तधा प्रान्तभूमिः प्रज्ञा व्याख्याता । तत्राद्यस्य योगिनो देवनिमन्त्रणयोग्यता नास्ति । अतः परिशेषान्मधुभूमिको योगी द्वितीयो यस्तस्य स्थानिभिः तत्तत्स्थानस्वामिभिर्महेन्द्रादिभिरुपनिमन्त्रणं प्रार्थनं क्रियते, भोः इहास्यतां स्वर्गादिस्थाने, रम्यतां कमनीयेयं कन्या, दिव्योऽयं भोगो, रसायनमिदं जरामृत्युनिवारकमिदं कामगं यानमित्येवं प्रार्थने सङ्गः कामः, अहो ! ममायं योगप्रभाव इति स्मयश्च न कर्त्तव्यः । किन्तु इत्थं तत्र दोषं भावयेत् घोरेषु संसाराङ्गारेषु पापच्यमानेन मया जन्ममृतिप्रबन्धचक्रारूढेन कथञ्चिदासादितः क्लेशकर्मान्धकारविध्वंसियोगप्रदीपः, तस्य चैते तृष्णायोनयो विषयवायवः प्रतिपन्थाः, स खल्वहं लब्धालोकः कथमनया मृगतृष्णया वञ्चितः, तस्यैव पुनः पुनः प्रदीप्तस्य संसाराग्नेरात्मानमिन्धनीकुर्यामिति स्वस्ति वः स्वप्नोपमेभ्यः कृपणप्रार्थनीयेभ्यो

विषयेभ्य इत्येवं निश्चितमतिः, समाधिं भावयेत्। सङ्गे पातित्यं, स्मये कृतकृत्यम्मन्यस्य योगासिद्धिः, ततो योगभ्रष्टस्य पुनः संसारस्यानिष्टस्य प्रसङ्गात् सङ्गस्मययोरकरणं कैवल्यविघ्ननिरासोपाय इत्यर्थः ॥ ५१ ॥

৫১। প্রথমকল্পিক মধুভূমিক প্রজ্ঞাজ্যোতি অতিক্রান্ত-ভাবনীয় ভেদে যোগী চারপ্রকার। তন্মধ্যে প্রথম যোগী সংযমে প্রবৃত্ত মাত্র, সুতরাং পরচিত্তাদি জানিতে পারে না। দ্বিতীয় যোগী সংযম-দ্বারা ঋতম্ভরাপ্রজ্ঞা নামক মধুভূমি চিত্তভূমিকে লাভ করিয়া সাক্ষাৎ কৃত ভূত ও ইন্দ্রিয়কে জয় করিতে ইচ্ছা করে ; তাহাকে জয় করিয়া ক্রমে মধুপ্রতীকা, বিশোকা, সংস্কারশেষা, এই তিনপ্রকার ভূমিকে লাভ করিতে ইচ্ছা করে। তৃতীয় ও ভূতেন্দ্রিয় জয় হেতু মহেন্দ্রাদি কর্তৃক অক্ষুদ্ধ বিশেষাদি ভূমিদ্বয় লাভপূর্ব্বক তাহাকে সাধন করিতে ইচ্ছা করিয়া স্বার্থ সংযমী হয়। সুতরাং চতুর্থ ষড়ৈশ্বর্য্যশালী বিবেকান্তর ভূমিত্রয় লাভ করিয়া বিরক্ত বিঘ্নসঙ্কাশূন্য জীবন্মুক্ত যোগের চতুর্থভূমিতে বর্ত্তমান হয়। যাহার সাতপ্রকার প্রান্তভূমি ব্যাখ্যা করা হইয়াছে। তন্মধ্যে আদ্যযোগীদিগের দেবনিমন্ত্রণ যোগ্যতা থাকে না। অতএব শেষ মধুভূমিকযোগী স্বর্গাদি বাসী ইন্দ্রাদি কর্তৃক অভ্যর্থিত হইয়া থাকে। "ওহে এই স্বর্গাদিস্থানে চলিয়া এসো" "ক্রিয়া কর" ইত্যাদি। কিন্তু এই প্রকার আমন্ত্রণে লিপ্সা এবং "অহো ! আমার তপস্যার এত প্রভাব এই প্রকার গর্ব্বও পরিহার্য্য।" সেই নিমন্ত্রণে কামনা অথবা গর্ব্ব করিলে পুনর্ব্বার সংসারে আসিতে হয়।

पूर्वं बुद्धिप्रतिबिम्बितपुरुषस्य स्वार्थसंयमात्तारकं विवेकज्ञानमुक्तं, तत्रोपायान्तरमाह

**क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥५२॥**

अभेद्यः कालभागः सत्यः क्षणः । अन्ये मुहूर्त्तादयः कालभागाः क्षणसमूहरूपा असत्याः । न हि क्षणानां समूहो वस्तु सन् तत्रायमस्मात्पूर्वक्षणोऽयमुत्तरक्षण इति क्षणानां, तेषां क्रमस्य पौर्वापर्यस्य संयमादतिसूक्ष्माणां भेदसाक्षात्कारो विवेको भवति । तेन च युगपद्वियदादीनां पुरुषान्तानां ज्ञानं साक्षात्कारात्मकं जायत इत्यर्थः ॥ ५२ ॥

৫২। বিভাগ করা যায় না এইরূপ অতিসূক্ষ্ম কালের অবয়বকে ক্ষণ বলে। মুহূর্ত্তাদি অন্য কালের ভাগ, ক্ষণ ও সমূহরূপ। ইহাতে এবং ইহাদের অবিচ্ছেদে পূর্ব্বাপর প্রবাহে সংযম করিলে অতিসূক্ষ্ম বস্তুর ভেদ ও সাক্ষাৎকার রূপ বিবেক জ্ঞান জন্মে। তাহার দ্বারা যুগপৎ আকাশাদি পুরুষান্ত জ্ঞানের সাক্ষাৎকার জন্মে।

इदं क्षणसंयमजं ज्ञानं सर्वविषयमित्यग्रे वक्ष्यते । संप्रति सूक्ष्मं तस्य विषयविशेषमाह—

**जातिलक्षणदेशैरन्यताऽनवच्छेदे तुल्ययोस्ततः प्रतिपत्तिः ॥ ५३ ॥**

अवच्छेदो निश्चयः। लोके हि भावानां त्रयो भेदनिश्चयहेतवः। तत्र देशेन लक्षणेन च तुल्ययोर्गो-गवययोर्जात्या भेदधीः। देशजातिभ्यां तुल्ययोर्गवोः कृष्णश्वेतादिलक्षणेन भेदधीः। जातिलक्षणाभ्यां तुल्य-योरामलकयोः पूर्वोत्तरादिदेशभेदाद्भेदनिश्चयः। यदा पुनर्योगिनो ज्ञानपरीक्षार्थं केनचित्पूर्वदेशस्थमामलक-मुत्तरामलकदेशे विन्यस्योत्तरामलकमन्यत्र्यासक्ते योगिन्यपहृतं, तदा तयोरामलकत्वजातिरूपपरिमाणमा-दिलक्षणेन देशेन च तुल्ययोर्जात्यादिभिरन्यत्वनिश्चया-संभवात् ततः क्षणसंयमजविवेकज्ञानादेवान्यत्वप्रति-पत्तिर्योगिनो भवति। यस्मिन् क्षणे पूर्वामलक-मुत्तरत्र विन्यस्तं, तस्मात्प्राचीनक्षणेषु तस्मिन्पूर्वदेशस्थ-रूपपूर्वपरिणाममाला जाता नोत्तरामलके, तस्य तेषु क्षणेषूत्तरत्वपरिणाममालावत्वात्, तथा च क्षणक्रमज्ञो योगी तयोः पूर्वोत्तरत्वपरिणाममालाक्षणेभ्योऽस्य क्षणस्यानन्तर्यं जानन्नधुनेदमुत्तरमितः प्राक् पूर्वं नोत्त-रमिति भेदं निश्चिनोतीत्यर्थः ॥५३॥

৫৩। গোত্বাদি জাতি পদার্থের অসাধারণ ধর্ম্ম ও দেশ এই তিন বস্তু দ্বারাই বস্তুর ভেদ হইয়া থাকে। যে স্থানে পূর্ব্বোক্ত তিনটীর কোনটীরই সম্ভাবনা নাই এবং পদার্থ হইতে পদার্থান্তরকে

ভিন্নরূপে জানিতে হইবে এইরূপ স্থলে বিবেক জ্ঞানই একমাত্র বস্তুর ভেদজ্ঞানের উপায়।

तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् ॥ ५४ ॥

तत्तत्संयमात्सर्वज्ञतोक्ता, सा प्रकारमात्रविषया यथा रसवत्यां निष्पन्नैः सर्वैर्व्यञ्जनैर्भुक्तमिति सर्वैर्व्यञ्जनप्रकारैर्भुक्तमिति गम्यते। तदन्यथा पुनः पात्रस्थैः सर्वैर्व्यञ्जनैरुपनीतं सर्वमन्नं भुक्तमित्युक्ते स्वरूपतः प्रकारतश्च निःशेषं भुक्तमिति गम्यते, तद्वदिदं क्षणसंयमजं विवेकज्ञानं सर्ववस्तुस्वरूपविषयं, सर्वथाविषयं सर्वप्रकारविषयं पुरुषतत्त्वावगाहित्वात्संसारसागरात्तारयतीति तारकसंज्ञमक्रमं युगपदेव करतलामलकवत्सर्वसमूहावलम्बनमित्यर्थः ॥ ५४ ॥

৫৪। পূর্ব্বোক্ত ক্ষণাদি সংযমের দ্বারা যে বিবেক জ্ঞান জন্মে সেই জ্ঞান যোগীকে সংসার সমুদ্র হইতে ত্রাণ করে বলিয়া তাহার নাম তারক। উক্ত জ্ঞান জন্মিলে করতলস্থ আমলকীর ন্যায় (সংসারে) তাহার অবিদিত কিছুই থাকে না, সকল বস্তুই তাহার নিকট প্রকাশ পায়।

एवं विवेकख्यातिकाष्ठाऽवधिकान् तत्तद्विभूतिफलान् संयमानुपन्यस्य ताद्दशविवेकख्यातिकाष्ठाऽस्तु वा

सा वा सत्त्वपुरुषान्यतासाक्षात्कारमात्रं मुक्तये कल्पत इत्यभिप्रेत्याह—

**सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति ॥ ५५॥**

निरस्तसमस्तरजोमलस्य बुद्धिसत्त्वस्य विवेकख्यात्या संस्कारशेषस्य सर्ववृत्तिशून्यत्वं शुद्धिः, पुरुषस्यापि नित्यशुद्धस्य तदा कल्पितभोगशून्यत्वं शुद्धिः, एवं तयोः शुद्धिसाम्ये सति कैवल्यम्। तत्तद्विभूतयस्तु श्रद्धोत्पादनार्थमुपन्यस्ताः। कैवल्यं तु बुद्धिविलक्षणपुरुषसाक्षात्कारमात्रादविद्यानिवृत्तावनागतदुःखानुत्पादरूपं सिध्यतीत्यर्थः ॥ ५५ ॥

इति विभूतिपादः ॥ ३ ॥

৫৫। বিবেক জ্ঞান দ্বারা সংস্কারমাত্রাবশিষ্ট এবং বিদূরিত সকল রজোগুণ বুদ্ধি এবং সত্ত্বের সকল বৃত্তিশূন্যতার নাম শুদ্ধি, নিত্যশুদ্ধ পুরুষের ও সেই সময়ে কল্পিত ভোগ শূন্যতার ন্যায় শুদ্ধি জন্মে। এই প্রকারে বুদ্ধি ও পুরুষের শুদ্ধি সম্পন্ন হইলে কৈবল্য হয়। যোগে বিভূতি সকল শ্রদ্ধোৎপত্তির জন্য বলা হইয়াছে।

## कैवल्यपादः ।



सर्वसाधनसिद्धीनां या स्यात्सिद्धिरनुत्तमा ।
कैवल्यरूपा तन्मात्रं सीतारामं नमाम्यहम् ॥

प्रथमद्वितीयपादयोर्योगतत्साधने प्रतिपादिते । तृतीये संयमसंज्ञमन्तरङ्गत्रयं, संयमस्य लक्ष्याः परिणामभेदाः सिद्धयश्चोक्ताः । तत्र काश्चिदतीतानागतज्ञानादिसिद्धयः श्रद्धाद्वारा कैवल्ययोगस्याङ्गम् । काश्चिदिन्द्रियजयादयः साक्षादङ्गम् । तारकसंज्ञिविवेकज्ञानसिद्धिर्योगस्य फलमिति निरूपितम् । इदानीं कैवल्यस्वरूपं प्राधान्येन प्रतिपादनीयं, तदर्थं कैवल्यभागीयं चित्तं परलोकः क्षणिकविज्ञानातिरिक्तात्मा चित्तविकारसुखादिभोक्ता धर्ममेघश्च वक्तव्यः प्रासङ्गिकं चान्यदुक्तव्यमिति चतुर्थः पाद आरभ्यते । तत्र प्रथमसिद्धचित्तेषु कैवल्ययोग्यं चित्तं वक्तुकामः पूर्वोक्तसिद्धीनां हेतुभेदात्पञ्चविधत्वमाह—

**जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥**

जन्मना पक्ष्यादीनामाकाशगमनादिसिद्धिः कपिलादीनां च सांसिद्धिकीत्युच्यते । ओषधिविशेषसेवया

माण्डव्यादीनाम्। मन्त्रजपेन केषांचिदणिमादिसिद्धिः। तपसा विश्वामित्रादीनां सिद्धिः। एताश्चतस्रः सिद्धयः पूर्वजन्माभ्यस्तयोगजा एव जन्मादिनिमित्तेन व्यज्यन्ते। अत एव योगाभ्यासे विश्वासेन प्रवृत्तिरिह सिद्ध्यदर्शनेऽपि जन्मान्तरे साफल्यात्। समाधिजास्तु पूर्वपादे व्याख्याताः ॥ १ ॥

১। সিদ্ধি স্বভাব জন্ম, ঔষধ, মন্ত্র ও সমাধিজ ভেদে চারি প্রকার। যক্ষাদির আকাশ গমন, কপিলের সাংসিদ্ধিক সিদ্ধি জন্মজন্য। মাণ্ডব্য প্রভৃতির সিদ্ধি ঔষধিজ। মন্ত্রজপের দ্বারা অনেকেরই সিদ্ধি হয়, তাহা মন্ত্রজন্য, বিশ্বামিত্রাদির তপজ-সিদ্ধি।

ननु तपःप्रभावादिहैव नन्दीश्वरस्य श्रीगौरीवल्लभकटाक्षवीक्षणेन देवशरीरपरिणामः श्रूयते। तत्र न तावदयं नरदेहो देवादिदेहस्योपादानं, तस्मिन् स्थिते परिणामान्तरायोगान्नष्टस्याहेतुत्वात्। नापि तदवयवा एवोपादानं नरदेहमात्रहेतोर्विलक्षणकार्य्यकारित्वायोगादित्याशङ्क्याह —

जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥

प्रधानादयः पृथिव्यन्ताः प्रकृतयस्तासां सर्वत्र सत्त्वान्नरादिदेहावयवेषु तासामापूराद्धर्मादिनिमित्तानुरोधेनावयवानुप्रवेशाज्जात्यन्तरपरिणामो युज्यते यथाऽ-

ग्निकणस्य प्रकृत्यनुग्रहाद्वनादौ बहुतृणादिमण्डलव्यापित्वं तद्वदित्यर्थः ॥ २ ॥

২। মনুষ্য প্রভৃতি অন্য জাতিতে পরিণত দেহও ইন্দ্রিয়ের অন্যরূপে অর্থাৎ দেব, বা পশু, পক্ষী প্রভৃতির শরীরেন্দ্রিয়রূপে পরিণাম প্রকৃতির আপূরণের দ্বারা হইয়া থাকে। ইহা যুক্তিযুক্ত, যেমন অতিক্ষুদ্র বহ্নিকণ প্রকৃতির অনুগ্রহে বন প্রবেশ করিয়া বহু তৃণে ব্যাপী হইতে পারে।

ननु प्रकृत्यापूरो धर्मादिनिमित्तमपेक्षते न वा ? न चेत्सर्वत्रापूरापत्तिः । नाद्यः । धर्मादेः प्रवर्त्तकत्वे पुरुषार्थः प्रवर्त्तक इति सिद्धान्तविरोधादित्यत आह

**निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥**

निरीश्वरसांख्ये हि पुरुषार्थ एवानागतः प्रकृतीनां प्रवर्त्तकः । अस्माकं तु सेश्वराणां तदुद्देशेनेश्वरः प्रवर्त्तक इत्युद्देश्यतया पुरुषार्थः प्रवर्त्तक इत्युच्यते । निमित्तं तु तासां न प्रवर्त्तकं तत्कार्यत्वात् । किं तु ततो निमित्ताद्वरणस्य प्रतिबन्धस्य बाधा भवति धर्मेणाधर्मनिरासे प्रकृतयः स्वयमेव देवादिपरिणामे प्रवर्त्तन्ते पापातिशयेन पुण्यप्रतिबन्धे सति तिर्य्यगादिपरिणामो यथा नहुषस्य सर्पपरिणामः । क्षेत्रिक-

वदिति यथा क्षेत्रिकः कृषीवलो जलस्योन्नतदेशादि-वरणभेदनमात्रं करोति ततो जलं स्वयमेव केदारान्तरे प्रवर्त्तते तद्वदित्यर्थः ॥ ३ ॥

৩। ধর্ম্মাধর্ম্মরূপ নিমিত্ত জীব-গুণ জাত্যন্তর পরিণামের প্রকৃষ্ট কারণ নহে। উহা দ্বারা কেবল প্রকৃতির আবরণ ভঙ্গ হয়। কৃষক সকল ক্ষেত্রের বাঁধ কাটিয়া দেয়, জল আপনা হইতেই এক ক্ষেত্র হইতে অন্য ক্ষেত্রে গমন করে।

ननु यदा योगी युगपद्भोगार्थं बहून् कायान् निर्मिमीते तदा तेषु चित्तानि कुतो भवन्त्यत आह—

निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥

योगप्रभावान्निर्मीयन्त इति निर्माणानि चित्तानि योगिसङ्कल्पाधीनप्रकृत्यापूरात् कायवदहङ्कारात् प्रकृति-जायन्त इत्यर्थः ॥ ४ ॥

৪। যোগিগণ ইচ্ছাপূর্ব্বক বহু শরীর ধারণ করিলে সেই সমস্ত শরীরে সঙ্কল্প বশতঃ অহঙ্কার হইতেই চিত্ত সকল উৎপন্ন হয়।

तर्हि चित्तानां भिन्नभिन्नाभिप्रायत्वात् योगिनो भोगासिद्धिरित्यत आह—

प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥

निर्मितचित्तानां योगी स्वभोगानुकूलप्रवृत्तिविशेष-

नियामकं चित्तं निर्मिमीते योगबलात्तच्चित्तं तेषां नायकं भवति तेन भोगस्तदनुसन्धानं युज्यत इत्यर्थः ॥५

৫। সিদ্ধি দ্বারা যোগিগণ অনেক দেহ ধারণ করেন, অনেক চিত্তের অভিপ্রায় ভিন্ন ভিন্ন হইতে পারে বলিয়া, তাঁহারা সমস্ত চিত্তের নিয়ামক একটী চিত্ত সৃজন করেন।

एवं जन्मादिभिः पञ्चविधानि सिद्धचित्तान्युक्तानि तेष्वपवर्गभागीयं चित्तं निर्द्धारयति –

तत्र ध्यानजमनाशयम् ॥ ६ ॥

तत्र तेषु जन्मादिजेषु यत्समाधिजं तदनाशयं क्लेश-वासनाशून्यं मोक्षयोग्यमित्यर्थः ॥ ६ ॥

৬। জন্ম প্রভৃতি পাঁচ প্রকার সিদ্ধি, সুতরাং সিদ্ধচিত্তও পাঁচ প্রকার, তন্মধ্যে সমাধি দ্বারা পবিত্র সিদ্ধচিত্তে ধর্ম্মাধর্ম্ম ও অবিদ্যাদি সংস্কার থাকে না, এইটীই মুক্তির উপযোগী।

योगिनश्चित्तवत्कर्मापि विलक्षणमित्याह—

कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥७

वाङ्मनससाध्यं सुखैकफलकं शुक्लं कर्म स्वाध्याय-तपःशीलानां भवति। दुःखैकफलकं कर्म कृष्णं दुरात्मनां भवति। सुखदुःखमिश्रफलकं बहिःसाधन-साध्यं शुक्लकृष्णं सोमयागादिरतानां भवति। तत्र व्रीह्यादिवधेन पिपीलिकाऽऽदिपरिपीड़या दक्षिणा-

दानादिपरानुग्रहेण च योगादिदं त्रिविधं कर्मेतरेषा-मयोगिनां भवति। योगिनस्तु सन्न्यासिनो बाह्यसाधन-साध्यकर्मत्यागान्न शुक्लकृष्णं कर्म, क्षीणक्लेशत्वान्न कृष्णं, योगजधर्मस्य फलमनभिध्यायेश्वरार्पितत्वान्न शुक्लं कर्मास्ति, अतश्चित्तशुद्धिविवेकख्यातिद्वारा मोक्षैक-फलकमशुक्लाकृष्णं कर्मेत्यर्थः ॥ ७ ॥

৭। যোগিগণের কর্ম্ম অশুক্ল অকৃষ্ণ অর্থাৎ পাপ বা পুণ্য কাহারই জনক নহে, ইতর সকল অর্থাৎ যাহারা যোগী নহে তাহাদের কর্ম্ম তিন প্রকার, শুক্ল, কৃষ্ণ ও শুক্লকৃষ্ণ অর্থাৎ ধর্ম্মাধর্ম্ম উভয়ের কারণ।

कर्मणः प्रसङ्गाद्वासनाऽभिव्यक्तिफलमाह—

## ततस्तद्विपाकानुगुणानामेवाभिव्यक्ति-वासनानाम् ॥ ८ ॥

ततस्त्रिविधात्कर्मणो मरणकालानन्तरं जात्यायु-र्भोगरूपविपाकदानायाभिव्यक्तौ तस्य विपाकस्यानु-गुणानां वासनानामभिव्यक्तिर्भवति न विरुद्धाना-मित्यर्थः। देवत्वप्राप्तौ चित्ते प्रसुप्ता एव नरकभोग वासना भवन्ति तासामभिव्यक्तौ दिव्यभोगायोगादिति-भावः ॥ ८ ॥

৮। পূর্ব্বোল্লিখিত শুক্ল, কৃষ্ণ ও শুক্লকৃষ্ণ এই তিন প্রকার কর্ম্ম হইতে কর্ম্মফল জাতি, আয়ু ও ভোগের অনুকূল সংস্কারগুলিরই উদ্বোধ হয়, অন্যবিধ সংস্কারের হয় না।

ननु स्वर्गदेशे देवजन्मनि जातास्तद्भोगेभ्यो वासनाः कथं नरव्याघ्रादिजन्मसहस्रव्यवधानानन्तरं पुनर्देवजन्मन्यभिव्यज्यन्ते। अनन्तरजन्मपूर्ववासना एव पूर्वदिनवासनावत्कुतो न व्यज्यन्त इत्यत आह—

**जातिदेशकालव्यवहितानामप्यानन्तर्य्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥**

यद्यपि सुप्तोत्थितस्यानन्तरपूर्वदिनानुभवजवासनाः प्रायेणाभिव्यज्यन्तेऽव्यवधानात् तथाऽप्यनादिसंसारे येन कर्मणा यज्जन्मनि भोगैर्वासनाः सञ्चिताः तासां जन्मकोट्या देशेन कल्पशतेन च व्यवहितानामपि तज्जातीयेन कर्मणा तज्जन्मनि पुनः प्राप्ते सति तेनैव कर्मणा जन्मना वाऽभिव्यक्तानामानन्तर्य्यमव्यवहितत्वं स्मृतिद्वारा भोगादिहेतुत्वमिति यावत्। विजातीयकर्मारब्धानन्तरपूर्वजन्मवासनानां व्यञ्जकाभावात् प्रसुप्तिरेव व्यवहितानामपि कर्मजन्मनोरभिव्यञ्जकयोः सत्त्वादभिव्यक्तिर्युक्ता। न च विजातीयत्वेऽप्यव्यवधानादनन्तरपूर्ववासना एव ताभ्यां स्मृत्याद्यर्थमभिव्यज्यन्तामिति

বাচ্যম্। স্মৃতিসংস্কারয়োরেকরূপত্বাদয়মর্থঃ ক্রিয়া জ্ঞানমন্যদ্বা রাগাদিকং শক্ত্যাত্মনা স্থিতঃ সংস্কারঃ। স চ স্বসমানবিষয়কক্রিয়াস্মৃত্যাদিহেতুঃ। ক্রিয়াসংস্কারঃ ক্রিয়াত্মনা, জ্ঞানসংস্কারঃ স্মৃত্যাত্মনা, অন্যসংস্কারোঽন্যাত্মনা, পরিণমত ইতি যাবত্। এবং স্মৃতিসংস্কারয়োরভেদেনৈকবিষয়ত্বেন চৈকরূপত্বাত্ আনন্তর্য্যমব্যিতঃ কার্য্যকারণভাবো ন বিজাতীয়য়োঃ। ন হি ব্যবধানং সংস্কারস্য বিরূপকার্য্যকারিত্বমাপাদয়তি ঘটানুভবজসংস্কারাদনন্তরমননুভূতস্মৃত্যাপত্তেরিতি॥৯॥

৯। পূর্ব্ব পূর্ব্ব জন্মের অনুভব জন্য সংস্কার সমুদয় অসংখ্যজন্ম, দেশ, কাল দ্বারা ব্যবহিত হইলেও হয় না, স্মরণকে উৎপন্ন করে, কারণ স্মৃতি ও সংস্কার একরূপ, সংস্কারই উদ্বোধক সহকারে স্মৃতিরূপে পরিণত হয়।

ননু জন্মান্তরিতবাসনা ন সন্তীতি বদন্তং চার্বাকং প্রত্যাহ—

## তাসামনাদিত্বঞ্চ আশিষো নিত্যত্বাত্ ॥১০॥

ন কেবলং তাসাং বাসনানামানন্ত্যং কিন্তু অনাদিত্বমপীতি চার্থঃ। কুতঃ? সদাঽহং ভূয়াসমিত্যাশিষো মরণত্রাসস্য নিত্যত্বাত্সর্বজনেষ্বব্যভিচারাদিত্যর্থঃ।

इदमत्राकूतम् । जातमात्रस्य कम्पाद्यनुमितो मरण-त्रासो द्वेष्यदुःखस्मृतिमव्यभिचारात्कल्पयति, सा वासनां, साऽपि मरणजदुःखानुभवं, सोऽस्मिञ्जन्मन्यसम्भाव्यमानो. जन्मान्तरं, कल्पयतीत्यनादित्वसिद्धिरिति । ननु देह-स्थानात्मत्वे कस्य जन्ममरणत्रासः आत्मनोऽनाद्यन्त-स्योभयत्वादिति चेत्, चित्तस्येति ब्रूमः तस्यैव ह्यनादि-वासनाऽनुविद्धस्य चित्तस्याहङ्कारिकत्वेन विभुनस्तत्त-द्देहसङ्कोचविकासशीलवृत्तिलाभो जन्मवृत्त्युपरमो मरणं तत्काले दुःखमित्यादिसर्वसंसारः ॥१०॥

১০। আমি যেন অমর হইয়া থাকি, সকলেরই এইরূপ ইচ্ছা হইয়া থাকে, না মরিলে মরণ দুঃখের অনুভব হয় না, অতএব উক্তরূপ ইচ্ছা হয় বলিয়া বুঝিতে হইবে যে পূর্ব্বোক্ত বাসনা সকল অনাদি।

नन्वनादिवासनानां कथमुच्छेदस्तत्राह—

हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ॥११॥

नैताः पुरुषवदनादयः किन्तु कार्या एव प्रवाहा अनादयः अतः कारणोच्छेदादुच्छेदसम्भवः । तथा हि पूर्वपूर्वभ्रमसंस्कारलक्षणाविद्याऽहमित्यस्मिताहेतुः सा च नरोऽहं ममेदमनिष्टमिति भ्रमहेतुः सोऽपि राग-द्वेषयोस्तौ च परनिग्रहादिद्वारा धर्माधर्मयोस्तौ च

भोगी सोऽपि वासनास्तु ताः पुनर्भ्रमादिष्वनादिसंसार-चक्रमनियमावर्त्तते। तत्र वासनानां क्लेशकर्माणि हेतवः, देहायुर्भोगाः फलं, चित्तमाश्रयः, शब्दादिकमालम्बनम्, एतैः संगृहीतत्वादेषां क्रियायोगाष्टाङ्ग-योगजाविप्लवविवेकख्यात्या उच्छेदे सति कारणानामभावादुच्छेदो भवतीत्यर्थः ॥ ११ ॥

১১। বাসনা সকল অসংখ্য এবং অনাদি হইলেও কারণের তিরোভাবে তাহাদের উচ্ছেদ হয়। বাসনার হেতু অবিদ্যাদি ক্লেশ ও ধর্ম্মাধর্ম্মরূপ কর্ম্ম, জাতি, আয়ু ও ভোগ তাহাদের ফল, চিত্ত আশ্রয়, শব্দাদি বিষয় আলম্বন, আত্মজ্ঞান দ্বারা এই সকলের উচ্ছেদ হইলে বাসনাদির বিনাশ হয়।

ननु सतां संस्काराणां कथमभावः इत्यत आह—

## अतीतानागतं स्वरूपतोऽस्त्यध्वभेदा-द्धर्माणाम् ॥१२॥

नासतामुत्पादो न सतां विनाशः "नासतो विद्यते भावो नाभावो विद्यते सतः" इति परमेश्वर-गीतास्मृतेः। "वेदाहं समतीतानि वर्त्तमानानि चार्जुन भविष्याणि च भूतानि" इति वर्तमानवदतीता-नागतस्य प्रत्यक्षवेद्यत्वोक्तेश्च न ह्यसतः प्रत्यक्षवेद्यत्वं सम्भवति तस्मादतीतानागतं धर्मजातं धर्मिणि शक्ति-

रूपेणास्त्येव यत्परिणामत्रयसंयमादिना योगिनः साक्षात्कुर्वन्ति कुलालादयश्च बुद्धावालिख्य कुर्वन्ति यदाऽन्वयो धर्मी स्थिरः एक उक्तः। ननु तर्हि वासनाऽऽदिबन्धसत्त्वात्तत्त्वज्ञानवैयर्थ्यमिति चेन्न। धर्माणामनागताद्यध्वनां भेदाद्वर्त्तमानाध्वनि हि दुःखादिवासनाचित्रं साधिकारमसंख्येयपरिणामशीलं चित्तं भोग्यताऽऽपन्नं बन्ध उच्यते। तत्त्वज्ञाने सति निरधिकारमतीताध्वनि प्रवेशितं प्रकृत्यात्मना सदपि पुनरुत्थानबीजस्य कर्तव्यपुरुषार्थस्य कृतत्वान्न पुनरावर्त्तत इत्यर्थः ॥ १२ ॥

১২। ভূত ও ভবিষ্যৎ একেবারে থাকে না এরূপ নহে, কিন্তু ধর্ম্মিস্বরূপে সূক্ষ্মভাবে অবস্থান করে, কারণ ধর্ম্মমাত্রই তিন প্রকার, অতীত, অনাগত ও বর্ত্তমান।

अतीतानागतं स्वरूपतोऽस्तीत्युक्तं तत्र किं स्वरूपमित्यत आह—

ते व्यक्तसूक्ष्मा गुणात्मानः ॥ १३ ॥

व्यक्ता वर्तमानाध्वानः, सूक्ष्मा अतीतानागताध्वानः, ते महदादयो घटादिविशेषान्ताः गुणात्मानः सत्त्वरजस्तमःस्वरूपा इत्यर्थः। सर्वे भावाः सुखदुःखमोहात्मकगुणान्वितत्वेन तत्प्रकृतित्वात् तत् स्वरूपा एव

यथा घटादयो मृदन्विताः मृत्स्वरूपाः प्रकृतिविकारयोर्भेदाभेदरूपतादात्म्यात्तत्र गुणाः परिणामिनित्याः । अन्ये सर्वे भावाः प्रतिक्षणपरिणामाः क्षणविध्वंसिनः । पुरुषस्तु कूटस्थः । तदुक्तं भाष्ये—

"गुणानां परमं रूपं न दृष्टिपथमिच्छति ।
यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम् ॥" इति ।
ऐन्द्रजालिकवत्क्षणविध्वंसीत्यर्थः ॥ १३ ॥

১৩। পূর্ব্বোল্লিখিত কর্ম্ম সকল ব্যক্ত ও সূক্ষ্ম, ব্যক্ত অর্থাৎ বর্ত্তমানরূপে কার্য্যকারী, সূক্ষ্ম অর্থাৎ কারণে অব্যক্তভাবে অবস্থিত, এই সকলগুলিই ত্রিগুণাত্মক।

ननु यदि त्रयो गुणाः परिणामिनः तर्हि परिणामानां प्रत्येकमेकत्वं न स्यात् न हि मृत्तन्तुदुग्धानामेकः परिणामो दृष्ट इत्यत आह—

परिणामैकत्वाद्वस्तुतत्त्वम् ॥ १४ ॥

बहूनामप्येकः परिणामो दृष्टः यथा रुमास्थले क्षिप्तानां गजाश्वादीनामेको लवणपरिणामः, वर्त्तितैलाग्नीनामेको दीपपरिणामः, मृदादीनां त्वङ्गाङ्गित्वाभावान्न परिणामैकत्वम् । गुणानां तु परिणामस्याङ्गाङ्गिभावस्यैकत्वाद्वस्तुनो महदादेस्तत्त्वमेकत्वं युज्यते । तत्र सत्त्वस्याङ्गित्वे गुणत्रयादेको महान्, तस्मादेक-

स्मादूजःप्रधानादहङ्कारः, तमःप्रधानात् पञ्चतन्मात्राणि प्रत्येकमेकत्वमन्ति भवन्ति, अहङ्कारात्सात्त्विकाद्बुद्धीन्द्रियाणि, राजसात्कर्मेन्द्रियाणि, उभयात्मकान्मनः । एवं शब्दतन्मात्रस्याङ्गित्वे सत्याकाशः पञ्चतन्मात्राणामेकः परिणामः । एवं स्पर्शरूपरसगन्धतन्मात्राणां क्रमेणाङ्गित्वे वाय्वग्न्यम्बुवनयः प्रत्येकं जायन्ते । एकस्माद्भव: परिणामास्तु बहुपरिणामवासनारूपशक्तिवैचित्र्यादित्यलं विस्तरेण ॥ १४ ॥

১৪। সকল পদার্থই যদি ত্রিগুণাত্মক হয়, তবে একটী শব্দ, একটী ইন্দ্রিয়, এইরূপ একত্ব ব্যবহার কেন হয়? এইরূপ সন্দেহে বলা হইতেছে, যদি সমস্তই ত্রিগুণাত্মক তথাপি একে অন্যের অঙ্গাঙ্গিভাব হয় বলিয়া গুণত্রয়রূপ বস্তুরও একত্ব ব্যবহার হয়।

ননু ক্ষণিকবিজ্ঞানাত্মকচিত্তাতিরিক্তং বস্তু নাস্ত্যেব যৎপ্রমেয়ং তদ্বিজ্ঞানাভিন্নং, যথা বিজ্ঞানং, প্রমেয়াশ্চ ঘটাদয়োঽতঃ কস্যৈকত্বনানাত্বচিন্তা চিত্তমেব জ্ঞানাদিসমনন্তরপ্রত্যয়াত্মকবাসনাবিচিত্রং দ্রব্যগুণাত্মনা ভাতীতি বদন্তং বৌদ্ধং প্রত্যাহ—

**वस्तुसाम्येऽपि चित्तभेदात्तयोर्विभक्तः पन्थाः ॥ १५ ॥**

तयोश्चित्तवस्तुनोर्विभक्तः पन्थाभिन्नो मार्गः विज्ञाना-

र्थयोर्भेद इति यावत्। कुतो वस्तुनः स्त्रीपिण्डादेः साम्येऽपि चित्तानां भेदात् यदेकस्यां नार्य्यां पत्युः सुखविज्ञानं, सपत्न्या दुःखविज्ञानं, तदलाभे कामुकस्य मोहो विषादस्तद्विज्ञानं, निष्कामस्योपेक्षाविज्ञानं, सर्वेषां या त्वया दृष्टा सा मयाऽपि दृष्टेत्यबाधितप्रत्यभिज्ञानादेकं वस्त्वनेकं विज्ञानमिति तयोर्भेदः। यदेकं तदनेकेभ्यो भिन्नं, यथा नीलविज्ञानं पीतविज्ञानेभ्यः, एकं च वस्त्वतः स्वगोचरानेकविज्ञानेभ्यो भिन्नम्। न च प्रमेयस्य प्रमैक्यं युक्तम्। एकत्वे विषयविषयित्व-विरोधाद्बाह्यार्थाभावे विज्ञानानां नीलपीताद्याकारत्वा-योगाच्च। न च प्रमेयात्मकवासना तत्र हेतुरिति वाच्यम्। नष्टस्याहेतुत्वात्। न चैकरूपार्थेऽपि कथं चित्तवैचित्र्यमिति वाच्यम्। अर्थस्य त्रिगुणत्वाद्धर्मा-धर्माविद्याऽपेक्षयाऽर्थगतानां सत्त्वरजस्तमसामुद्रेकात् सुखदुःखमोहविज्ञानहेतुत्वं तत्त्वज्ञानापेक्षया गुणानां साम्यादुपेक्षाहेतुत्वमिति युक्तत्वात्तस्मादस्ति विज्ञाना-तिरिक्तोऽर्थः ॥ १५ ॥

১৫। জ্ঞান ও জ্ঞেয়ের ভেদ কেনই বা যুক্তিযুক্ত হয়? এই অভিপ্রায়ে সূত্র বলা হইয়াছে। বস্তু এক হইলেও জ্ঞান ভিন্ন ভিন্ন হয়; অতএব বস্তু ও জ্ঞানের স্বভাব একবিধ নহে।

यत्तु कश्चिदाह, - अस्तु विज्ञानादन्योऽर्थः स तु जड़त्वाद्विज्ञानग्राह्यः प्रातिभासिको नाज्ञातोऽस्तीति । स वक्तव्यः, कुतस्तस्योत्पत्तिरिति. ग्राहकविज्ञानाच्चित्ता- दीति ? चेत् किमेकचैत्रचित्तस्य घटवस्तुकार्य्यम्, उत चैत्रमैत्राद्यनेकचित्तानां, नाद्य इत्याह —

**न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात् ॥ १६ ॥**

यद्येकचित्तस्य कार्य्यं घटवस्तु तदा तस्मिंश्चित्ते पटादिषु व्यग्रे तद्वस्त्वप्रमाणकं किं नष्टं स्यादित्यर्थः । न चेष्टापत्तिः । पुनस्तद्दर्शने सोऽयमित्यबाधितप्रत्य- भिज्ञानादेकस्य व्यग्रत्वेऽप्यन्येन दृश्यमानत्वाच्च तस्मा- न्नैकचित्ततन्त्रं वस्तु नाप्यनेकचित्ततन्त्रं प्रातिभासिकस्य स्वप्नवदेकचित्ततन्त्रत्वनियमात्पूर्वमेकेन दृश्यमाने घटे बहुचित्तैः पश्चात्कस्माद्भि विलक्षणघटान्तरोत्पत्तिः कल्पनाच्च सामग्रीवैलक्षण्यात् । किं चोदरदर्शनकाले पृष्ठभागो नास्तीत्युदरमपि न स्यात् ? तस्मान्न प्रातिभासिकं वस्तु किन्तु चित्तातिरिक्तं स्वतन्त्रमिति सिद्धम् ॥ १६ ॥

১৬। বস্তু চিত্তের একটী বিষয়, এরূপ বলা যায় না, কারণ সেই চিত্ত ব্যগ্র অথবা নিরুদ্ধ হইলে সেই সময় বস্তুটীর প্রমাণ থাকে না, সুতরাং বস্তু তখন থাকে না বলিতে পারা যায়।

ननु सिद्धान्ते विभुनश्चित्तस्य सर्वसम्बन्धात् सदा सर्वं ज्ञायेतेत्यत आह—

तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥ १७ ॥

यद्यप्याहङ्कारिकत्वाच्चित्तेन्द्रियाणि विभूनि तथाऽपि तेषामहङ्कारे सुप्तानां सम्बन्धो विषयस्य स्फूर्त्तावहेतुः किन्तु कर्मणाऽभिव्यक्तानां देहस्थानां, तथा चेन्द्रियद्वारा येनार्थेन चित्तस्योपरागः तस्मिन्नर्थे चित्तं स्वनिष्ठचित्प्रतिबिम्बरूपां स्फूर्त्तिं धत्ते तमर्थं स्वाकारवृत्तिद्वारा बुद्धिस्थप्रतिबिम्बद्वारा पुरुषश्चेतयते नान्यमिति वस्तु ज्ञाताज्ञातं भवति। अत एव चित्तं तदर्थोपरागमपेक्ष्य कदाचिद्वस्तु जानाति कदाचिन्नेति ज्ञाताज्ञातविषयत्वात्परिणामीति भावः ॥ १७ ॥

১৭। যদ্যপি চিত্ত বিভু, এবং তাহার স্বভাব বিষয় প্রকাশ করা, তথাপি সর্ব্বদা সকল বিষয়ের জ্ঞান হয় না, ইন্দ্রিয়কে দ্বার করিয়া সে যখন যে বিষয়াকারে পরিণত হয় তখনই সেই বিষয়ের জ্ঞান জন্মে, নতুবা অজ্ঞাত থাকে।

तर्हि आत्मनः परिणामित्वमित्यत आह—

सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात् ॥ १८ ॥

पुरुषस्य हि चित्तमूढ़ादिसर्ववृत्तिकं चित्तं विषयः यदि चित्तेन स्वविषयशब्दादिवत् पुरुषेण स्वसत्ताकाले न ज्ञायेत तदा चित्तवत्परिणामी स्यात्पुरुषः वृत्तिपरिणामं तत्तदाकारमपेक्ष्य तज्ज्ञातत्वापातात् तदा किं परिणामिद्वयेनेति चित्तादन्यः पुरुषो न स्यात् सदैव तु स्वसत्ताकाले ज्ञायमानाश्चित्तवृत्तयो भोग्याः शब्दाद्याकाराः तस्य भोग्यस्य प्रभोर्भोक्तुरपरिणामित्वं ज्ञापयन्ति साक्षिणोऽपरिणामित्वादेव हि स्वयं सदा ज्ञाता भवन्ति नान्यथेत्यर्थः ॥ १८ ॥

১৮। পূর্ব্বোল্লিখিত চিত্তই যাঁহার বিষয় অর্থাৎ ভোগ্যচিত্তবৃত্তি সমুদয় সেই ভোক্তৃপুরুষের সর্ব্বদা পরিজ্ঞাত থাকে, কারণ পুরুষের পরিণাম নাই।

ননু চিত্তমেব ক্ষণিকং স্বপ্রকাশং স্বস্বার্থয়োর্ভাসকमस्तु किं साक्षिणेत्यत आह —

न तत्स्वाभासं दृश्यत्वात् ॥ १९ ॥

रूपी घट इतिवत् सुख्यहं, क्रुद्धोऽहं, शान्तं मे मनः, इति दृश्यत्वाच्चित्तं स्वाभासं स्वप्रकाशं न भवतीत्यर्थः। अयं भावः। किमिदं स्वप्रकाशत्वं न तावत्स्वाभिन्नप्रकाशक्रियाकर्मत्वं क्रियाकर्मणोरैक्यायोगान्न हि गतिर्गम्यते, किन्तु ग्रामः, नापि पुरुषवच्चित्तस्य स्वभिन्न-

प्रकाशाविषयत्वं क्रुद्धं मे मन इत्यनुभवविषयत्वादतो दृश्यत्वात् स्वातिरिक्तद्रष्टृकं चित्तं सोऽहमिति प्रत्यभिज्ञानान्न क्षणिकमिति ॥ १९ ॥

১৯। চিত্ত স্বপ্রকাশ হইতে পারে না, কারণ দৃশ্য অর্থাৎ জ্ঞেয়, যে দৃশ্য হয় সে স্বপ্রকাশ নহে, যেমন ঘটপটাদি।

किञ्च—

एकसमये चोभयानवधारणम् ॥ २० ॥

क्षणिकवादिन एकस्मिन्नेव क्षणे चित्तचैतन्ययोरुभयोरवधारणं न सम्भवतीत्यर्थः। तथा हि,—घटमहमद्राक्षमिति चित्तार्थयोः स्मरणं तयोरनुभवजन्यं तत्र चित्तक्षणे तयोः कथमनुभवः? न च चित्तमेवोभयानुभव इति वाच्यम्। अर्थस्य चित्तजन्यत्वेऽर्थक्षणे चित्तासत्त्वादजन्यत्वे तत्समकालत्वेऽपि तदुत्पत्तितादात्म्ययोरभावेन तद्ग्राह्यत्वायोगाद् असम्बद्धग्राहित्वे चित्तस्य सर्वज्ञताऽऽपत्तिः। उक्तं हि,—सौगतैः "अतदुत्पत्तिरतदात्मा च तेन न गृह्यत" इति। न वा चित्तं स्वानुभवं दृश्यत्वादित्युक्तं, नापि चित्तं स्वस्वार्थयोरनुभवद्वयम्। अतिक्षणिकस्योत्पत्तिव्यतिरिक्तव्यापाराभावात्। उक्तं हि,—"भूतिर्येषां क्रिया सैव कारकं सैव चोच्यत" इति। न चैकस्याद् व्यापारभेदं विना कार्य्यभेदो युक्तः।

